सकलकर्म्मनिर्म्मुक्तमव्ययपरमपदप्रापकसच्चारित्रपरिपालनगोचरः श्रेयान् । तच्च पिण्डविशुद्ध्यादिग्रथनया प्रवर्तमानानामुपजायते पिण्डस्यारोपसम्भिन्नदेहस्य चारित्रस्यावस्थानात् । सा च न ज्ञायते सम्यग् विज्ञायते सद्गुरुभिः । यद्यपि च पूर्वमुनिप्रणीतचिर-न्तनग्रन्थेषु सानेकधा स्थाने स्थाने निरूपिता, तथापि नाधुनिकमुनीनां दुःषमाकालबलेन परिहीयमाणमेधायुर्बलानां मानवानामस्व-ल्पोपकारायेति विभाव्य श्रीमज्जिनवल्लभाभिधसूरिभिर्युगीनप्रधानैर्भविकजनोपकाराय महार्थसंक्षेपात् पिण्डनिर्युक्तिशास्त्राद् समु-द्धृत्य पिण्डविषयविशुद्धिलक्षणप्रतिनियतार्थाभिधायकत्वाद्यथार्थनामकमल्पग्रन्थमहार्थं पिण्डविशुद्ध्यभिधानमिदं शास्त्रं कर्तुमारेभे । तत्र च शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमाना विघ्नविनायकोपशमनाय विघ्नाभावेऽपि शिष्टसमाचारपरिपालनाय चेष्टदेवतानमस्कारपुरस्सरं प्रवर्त्तन्ते । ततोऽयमपि तन्मार्गमनुसरन्निष्टदेवतानमस्कारं प्रेक्षावत्प्रवृत्त्यङ्गत्वेनाभिधेयादि च वक्तुकामस्तावत् मङ्गलाद्यभिधायिकां गाथामाह ।

देविन्दविन्दवन्दिय-पयारविन्देऽभिवन्दिय जिणिन्दे । वोच्छामि सुविहियहियं पिण्डविसोहिं समासेण ॥१॥

व्याख्या—जिनेन्द्रानभिवन्द्य पिण्डविशोधिं वक्ष्यामीति क्रिया । तत्र नानाजन्मादिदुःसहदुःखनिबन्धनरागादीनां जेतारो जिनाः सामान्यकेवलिनस्तेषामिन्द्राः प्रवरातिशयविभवादिपरमैश्वर्ययुक्तत्वात्तीर्थकरास्तान् । कीदृशान् ? इत्याह देवेन्द्रवृन्दवन्दितपदारवि-न्दान् । तत्र पूर्वकृतोपात्तशुभकर्म्मवशाद्यथेष्टक्रीडाविशेषरतियुक्ता देवा भवनपत्यादयोऽमरास्तेषामिन्द्राः शक्रास्तेषां वृन्दानि समूहास्तै-र्वन्दितानि नमस्कृतानि, पादाश्चरणाः पद्यन्ते गम्यन्तेऽनेनेति पदाः त एव अरविन्दानि पद्मानि येषां ते देवेन्द्रवृन्दवन्दितपदारविन्दास्ता-नभिवन्द्य प्रकर्षमनोवाक्कायैर्नमस्कृत्य वक्ष्याम्यभिधास्ये प्रतिपादयिष्ये । सुविहिताः शोभनाचरणानुष्ठानविधातारो यतयस्तेषां हितोपकारि-

त्वाद्योग्या तां, कामित्याह पिण्डविशोधिमिति। तत्र पिण्डनं पिण्डो मीलनमात्रम्। तच्च येषामस्ति तैः सहितस्यैवोपचाराद्वस्तूनि अपि पिण्डः। यद्वा पिण्ड्यत इति पिण्डः, पिण्डनीयं वस्तु, स च नामादिभेदैरागमे यद्यप्यनेकधोक्तं, तथापीह संयमादिरूपभाव- पिण्डोपकारकस्य द्रव्यपिण्डस्याहारादेर्ग्रहणम्। तस्य विशोधिरुद्गमादिदोषरहिततया निर्मलता। तत उद्गमादिदोषस्वरूपपरिज्ञापनेन पिण्डनिर्मलताकारिणी शास्त्रपद्धतिरपि पिण्डविशोधिरित्युच्यते। यद्वा विशोधिहेतुरुद्गमादिदोषपरिज्ञापनमप्युपचाराद्विशोधिस्ततः पिण्डस्य विशोधिर्यस्यां शास्त्रपद्धतै सा तथेति विग्रहस्ताम्। अथ पूर्वाचार्यैरेव तस्या अभिहितत्वात् किं भवतो भणनेनेत्याह। समासेन संक्षेपेण। पूर्वाचार्यैर्विस्तरेण सोक्ता मया तु वक्ष्यते स्तोकग्रन्थेनेति भावः। अत्र पूर्वार्द्धेन जिनेन्द्रनमस्करणान् मङ्गलमुक्तम्। पिण्डविशोधिं वक्ष्यामीत्यभिधेयमेतस्या एवात्र शास्त्रेऽभिधास्यमानत्वात्। सम्बन्धस्तूपायोपेयलक्षणस्तत्र प्रकरणमिदमुपाय उपेयं तु पिण्डशुद्धिपरिज्ञानमिति। प्रयोजनं तु संक्षेपभणनरूपं शास्त्रकृतैवोपात्तम्। यद्वा कर्त्तुः श्रोतुः प्रत्येकमनन्तरपरम्परभेदभिन्नं साक्षाद- नुक्तमप्येतल्लभ्यते। तत्रानन्तरं कर्त्तुः प्रयोजनं सत्त्वानुग्रहः, श्रोतुश्च प्रकरणार्थपरिज्ञानम्। परम्परं तु द्वयोरपि परमपदावाप्तिरिति। एतेन सर्व्वशास्त्रकाराणां प्रवृत्तिरनुश्रिता भवति, उक्तं च–'सम्बन्धभिधेयपयोयणाइं तह मङ्गलं च सत्थंमि। सोसपवित्तिनिमित्तं निविग्घत्थं च चिन्तेज्जा'॥ इति गाथार्थः ॥१॥

पिण्डविशोधिं वक्ष्यामीति प्रतिज्ञातम्। तत्र मुमुक्षुभिः पिण्डस्य विशुद्धिरेव किमर्थं विधीयते येन तत् परिज्ञानाय तदभिधायकं शास्त्रं कर्त्तुमारभ्यत इति पराभिप्रायं चेतसि निधाय शास्त्रकरणप्रयाससाफल्यप्रकाशनगर्भं यद्दोषविकलस्य पिण्डस्य शुद्धिर्भवति तान् वक्तुकाम इमां तत्प्रस्तावनामाह।

भावतः। परिष्ठापनमन्तश्च मनोवाक्काययन्त्रणम् ॥५॥' अलं प्रसङ्गेन, प्रकृतमुच्यते। सो देहेत्ति स संयमः, देहेत्ति विभक्तिव्यत्ययाद्देहेन शरीरेण सम्पद्यते देहसाध्यत्वात्तस्य, यदुक्तम्—'शरीरमाद्यं खलु धर्मसाधनमिति', स देहः पिण्डेनाहारेणोपष्टभ्यः, संयमोपकाराय जायते। सदोषो वक्ष्यमाणोद्गमादिदोषवृन्दान्वितः स पिण्डः प्रतिक्रुष्टो निषिद्धो जिनादिभिरिति दृश्यम्। अथ क एते दोषा यैर्दुष्टोऽसौ ग्रहीतुं निषिद्ध इत्याह। 'इमे ते य'त्ति, ते पुनर्दोषा आहाराशुद्धिरूपाणि दूषणानि इमे वक्ष्यमाणाः सम्भवन्तीति गाथार्थः ॥२॥

साम्प्रतं प्रास्तावितपिण्डदोषावसरः। ते च द्विचत्वारिंशत्। यत उक्तम् 'सोलस उग्गमदोसा सोलस उप्पायणाए दोसा उ। दस एसणाए दोसा बायालीसं इय हवन्ति'त्ति। तत्र तावदाहारोद्गमविषयषोडशदोषान् यथानामग्राहं द्वारगाथाद्वयेन वक्तुमाह—

आहाकम्मु१द्देसिय२ पूईकम्मे य३ मीसजाए य४। ठवणा५ पाहुडियाए६ पाउयर७ कीय८ पामिच्चे९ ३।

परिअट्टिए १० अभिहडु ११ ब्भिन्ने१२मालोहडे अ १३ अच्छिज्जे १४।

अणिसिट्ठ १५ ज्झोयरए १६ सोलसपिण्डुग्गमे दोसा। ४

व्याख्या—आधाकर्म्मादयोऽध्यवपूरकान्ताः षोडश पिण्डोद्गमविषया दोषाः स्युरिति गाथाद्वयस्य सम्बन्धः। इह च विभक्तिलोपविभक्तिव्यत्ययानुस्वारलोपादिकं यत्र दृश्यते, तत्र सर्व्वत्र प्राकृतत्वात्तद्दृष्टव्यमिति न न्यूनाधिकत्वदोषो वक्तव्यः। 'तत्राहाकम्मत्ति,' आधानमाधा, प्रस्तावात्साधुप्राणिनां यथाऽमुकस्मै साधवे इदं भक्तादि देयमित्यादिक्रियेति तत्त्वम्, यद्वा आधाय सङ्कल्प्य कर्म्म क्रियेति विगृह्य निरुक्तवशेन यकारलोपादाधाकर्म्मिकेत्युद्गमदोषस्तद्योगाद्भक्ताद्यपि १। तथा 'उद्देसियत्ति' अनुस्वारलोपादुद्देशो

त्वादित्येवं स्वरूपाः पोडशसंख्याः पिण्डोद्गमे पिण्डोत्पत्तौ दोषा भवन्तीति शेपः। एते पिण्डोद्गमदोषाः पोडशेति तत्त्वमिति द्वार-गाथाद्वयार्थः ॥४॥

इदानीमाद्यद्वारव्याख्यावसरस्तत्राद्यद्वारोपात्तदोपस्याधाकर्म्माख्यस्य सान्वयं नामत्रयं भवति, यथाधाकर्म्म अधःकर्म्म आत्मघ्न-मिति। तत्र क्रमेण त्रीण्यपि व्युत्पादयन्नादौ तावदाधाकर्म्मशब्दस्य व्युत्पत्तिमाह–

**आहाए वियप्पेणं जईण कम्ममसणाइकरणं जं। छक्कायारम्भेणं तं आहाकम्ममाहंसु ॥५॥**

व्याख्या—'आहाएत्ति' आधायाः पर्यायमाह–विकल्पेन साधुभ्यो दास्यामि इति कृतेन सङ्कल्पेनेत्यर्थः, दायकेन यतीनां साधू-नामर्थायेति गम्यते। यत्कर्म अशनादिकरणमशनादेः पाकादिक्रिया क्रियत इत्यर्थः। कथं यत्कर्म्मेत्याह–पट्कायारम्भेण पृथ्व्या-दिपड्जीवनिकायोपमर्देन, तत्पृथिव्याद्युपमर्दोद्भूतपचनादि, तद्योगात्तदशनादिकर्म्माधाकर्म्मोक्तवन्तस्तीर्थंकरादयः। यद्वा आधयेति विकल्पेन, केषां सम्बन्धिन्येत्याह–यतीनामिति यतिदानसङ्कल्पेनेति तत्त्वम्। 'कम्मं'ति कर्म्म, किं तदित्याह–'असणाइ करणं जं'ति, अशनादीनां भोजनप्रभृतीनां करणं निष्पादनं यत् पट्कायोपमर्देन गृहिणा क्रियत इति शेपः। तदिति साधुदानसङ्कल्पपट्कायारम्भ-निष्पन्नमशनादिकमाधाकर्म्म ब्रुवते। इह च यद्यपि पट्कायारम्भेण यत् क्रियते गृहे वस्त्रादि तदप्याधाकर्म्म स्यात् तथापीह तन्न ग्राह्यम्, पिण्डस्यैवाधिकृतत्वादिति गाथार्थः ॥५॥

अधुनाऽधःकर्म्मात्मघ्नशब्दयोर्व्युत्पत्तिमाह।

**अहवा जं तग्गाहिं कुणइ अहे संजमाउ नरए वा। हणइ व चरणायं से अहकम्म तमायहम्मं वा ॥६॥**

नवरं वाशब्दोऽयमभिधानसमुच्चयार्थः । इति गाथार्थः ॥६॥ यद्वाधाकर्म्म-

अथ जीवमाश्रित्योक्तस्याधःकर्म्मणो यैः करणभूतैर्जीवस्य तत्स्याचेषामाधाकर्म्मभोजिनां प्रतिनिर्वचनस्वरूपमाह ।

ण एवात्मकर्म्मेति शास्त्रान्तरे नामान्तरं चतुर्थमस्ति, तद्व्याख्यातुमाह—

**अट्ठवि कम्माइं अहे वंधइ पकरेइ चिणइ उवचिणइ । कम्मियभोई अ साहू जं भणियं भगवईए फुडं ॥७॥**

व्याख्या—इह किल जन्तुरायुर्बन्धाभावेन चिरं सप्तविधबन्धक एव प्राप्यते । भवमध्ये च स्वायुषः त्रिभागाद्यवशेषे यदायुर्बध्नाति वारमेकं तदाऽष्टविधबन्धकः प्राप्यते । ततश्च कार्मिकभोजीत्युपलक्षणत्वादाधाकर्म्मिकभोजी, लौल्यनिःशूकत्वाभ्यां साध्वर्थकृताहारा-भ्यवहरणशीलः 'तच्छीलार्थइन्प्रत्ययः' चकारेणानाभोगतस्तु तमभ्यवहरन्नपि न तथा बद्धवान् इत्याचष्टे । साधुर्यतिरष्टावप्यष्टसङ्ख्या-न्यपि न केवलं सप्तेत्यपेरर्थः । कर्म्माणि ज्ञानावरणादीनि । अहेति अधोगतिविषयाणि नरकादिगतिगमनयोग्यानि बध्नाति प्रकृत्या-दिरूपतया निधत्तं यातीति कृत्वाधःकर्म्मोक्तं, आत्मनः कर्म्मबन्धनादात्मकर्म्मेति वा । अत्र च यत् किल भाविभवायुर्भवमध्ये वारमेकं बध्यते तदाप्यधोनरकादिगतिविषयमसौ बध्नाति । तद्बन्धे तु शेषाण्यपि सप्ताधोगतिविषयाण्येव तान्यसौ बध्नातीत्यष्टावपीति सा-मर्थ्येनोक्तम् । एतेन अष्टानामपि कर्म्मणां बध्यमानानामसावुक्तः । अथ तेषामेव पूर्व्वबद्धानामवस्थामाह—'पकरेइ चिणइ उवचिणइ'त्ति आधाकर्मिकभोजी यतिः कर्म्माणि पूर्व्वबद्धानि प्रकरोति स्थितिरूपतया निर्व्वर्त्तयति दीर्घस्थितीन् कर्त्तुमारभते इति यावत्, तथा चिनोति अनुभागरूपतया तान्यभिवर्द्धयति, उपचिनोति, प्रदेशतया तान्युपचितानि करोतीत्यर्थः । अथेदं भुञ्जानोऽधः कर्म्माणि बध्नातीति किमन्यत्रापि कुत्रचिदुक्तमित्याह—यद्भणितं यदुक्तम्, भगवत्यां पञ्चमाङ्गे, स्फुटं प्रगटं, तथा च तत्सूत्रं "आहा

वरसाः स तीव्रानुभावा गाढतररसाः प्रकरोति आधाकर्म्मभोजित्वस्य कषायहेतुत्वात्। अनुभागबन्धस्य च कषायप्रत्ययत्वादिति। तथा अप्पपएसेत्यादीति अल्पं स्तोकं प्रदेशाग्रं कर्म्मदलिकपरिमाणं यासां तास्तथा ता बहुप्रदेशाः प्रकरोति। प्रदेशबन्धस्यापि योगप्रत्ययत्वादाधाकर्म्मभोजित्वस्य च योगरूपत्वादिति। तथा आउयं चेत्यादि आयुः पुनः कर्म्म, स्यात् कदाचिद्वध्नाति स्यान्नबध्नाति। यस्मात्त्रिभागाद्यवशेषायुषः परभवायुः प्रकुर्व्वन्ति तेन यदा त्रिभागादिस्तदा बध्नाति अन्यदा न बध्नातीति। असायेत्यादि तथा असातावेदनीयं च दुःखवेदनीयं कर्म्म भूयो भूयो पुनः पुनः उपचिनोति उपचितं करोति। ननु कर्म्मसप्तकान्तर्वर्त्तित्वादसातावेदनीयस्य पूर्व्वोक्तविशेषणेभ्य एव तदुपचयप्रतिपत्तेः किं तद्ग्रहणेनेत्यत्रोच्यते, आधाकर्म्मभोजी अत्यन्तं दुःखितो भवतीति प्रतिपादनेन भयजननादाधाकर्म्मभोजित्वनिरासार्थमिदमित्यदुष्टमिति। 'अणाइयं' ति अविद्यमानादिकं अनवदग्रं अनन्तमित्यर्थः। अत एव दीर्घाद्धं प्रभूतकालं 'चाउरंतंति' चतुरन्तं देवादिगतिभेदाच्चतुर्विभागं तदेव स्वार्थेऽण्प्रत्ययोपादानाच्चातुरन्तं संसारकान्तारं भवारण्यं 'अणुपरिअट्टइत्ति' पुनर्भ्रमति। 'आयाए' त्ति आत्मना धर्म्मं चारित्रधर्म्मं श्रुतधर्म्मं वा। पुढवेकायं नावकंखइ त्ति पृथ्वीकायं नापेक्षते नानुकम्पत इत्यर्थः। इति गाथार्थः ॥७॥

एवं तावदाद्यद्वारोक्तदोषस्य नामान्यभिधाय अधुना तत् स्वरूपं सप्रपञ्चं व्यावर्णयितुकामः तत् प्रतिबद्धद्वाराणि निरूपयन्नाह—

तं पुण १ जं जस्स २ जहा ३ जारिस ४ असणे य तस्स जे दोसा ५।
दाणे य ६ जहापुच्छा ७ छलणा ८ सुद्धी य ९ तह वोच्छं ॥८॥

व्याख्या—अशनमादिः प्रभृतिर्येषां पानादिभेदानां [illegible] । ततः अशनादयश्चत्वारः चतुःसङ्ख्याभेदा-
दिस्थं जलम्, खादिमं चिंचिणिकापुष्पनालिकेरादिकम्, स्वादिमं सुण्ठिहरीतक्यादिकम् । ततः अशनादयश्चत्वारः चतुःसङ्ख्याभेदा-
विशेषा यस्य स तथा तं, कमित्याह–'आहारं'ति, तत्राह्रियते तृप्तिजननायासावित्याहारः समयभाषया पूर्व्वोक्त एवाशनादिस्तं आधा-
कर्म्मेत्याधाकर्म्मशब्दवाच्यं इहेति प्रवचने, यद्वा पिण्डशुद्धिप्रक्रमे, इतरथा साध्वर्थं यद्गृहादिकं चीयते वस्त्रादिकं वाऽऽप्यते तुम्बकादे-
श्च मुखादिकं यस्य क्रियते तदप्याधाकर्म्म भवतीति केवलं तन्न ग्राह्यमप्रस्तुतत्वात्, ब्रुवतेऽभिदधति जिनादयः । कीदृशं सन्तमित्याह–
प्रथममेवादित एव वपनकृत्यत्वमारभ्येति यावत्, चियशब्दस्यैवकारार्थत्वात्, यतियोग्यं साधुजनोचितं यतिनिमित्तमिति यावत्,
क्रियमाणं निर्वर्त्यमानं गृहिणानिष्ठितं चेति, निष्ठाऽवसानं सा सञ्जाताऽस्येति निष्ठितो निश्चेतनीभूतस्तं, चः समुच्चये क विषये
निष्ठित इत्याह–'तर्हिं'ति, प्रस्तावात्तस्मिन् यतिविषये साधोरालम्बनेन सर्व्वथा प्रासुकीभूतमिति तत्त्वम्, इत्थम्भूतमाहारमाधकर्म्म ब्रुवते
इति गर्भार्थः । अत्र द्वारपादोपात्तपुनःशब्दसूचितमशनादिरूपस्याधाकर्म्मणः सम्भवं पढमं चियेत्यनेन पदेनाभिहितवान्, तथाहि–
कथमादित एवाधाकर्मिकमशनादिकं सम्भवति ? इति, उच्यते–कश्चिद् गृही अतिभक्तिभरनिर्भराङ्गः साधूनामकल्प्यमेतदिति जाना-
नोऽजानानो वा स्वक्षेत्रे कुतोऽपि कारणतः साधूनामनवस्थानमवलोक्य प्रच्छन्नादिना ज्ञात्वा च साधूनामवस्थानहेतोरशनादेश्चतुर्विध-
स्याप्याहारस्य वपनादिनोत्पादनं करोति तत्राशनोत्पादनमाश्रित्याख्यानकं पूर्वाचार्योक्तम् यथा—

"अणेगकुलसयसंकुलो संकुलो नाम गामो आसी, तम्मि जिणदत्तो नाम सावओ, तस्सय जिणमती नाम भज्जा । तत्थ कोद्दवरालगा
उप्पज्जन्ति त्ति तेसिं संतिउ कूरो भिक्खाए पउरो लब्भइ, वसही अ रमणिज्जा लब्भइ, सज्झाओ य निव्वहइ, परं आयरियाइपाउग्गो

पडिवज्जन्ते। तहा अन्नेण जणणी भणिया, जहा तंमि चेव देवरस्स भज्जा मया, तओहं तेण अभज्जेण भज्जा पडिवन्ना अन्नहा न पडिवज्जन्ते। तहा अन्नेण जणणी भणिया, जहा तंमि चेव देवरस्स भज्जा मया, तओहं तेण अभज्जेण भज्जा पडिवन्ना अन्नहा न सालिकंजियं च साहूणं देहि। इच्चाइबालाइजणजंपियं सालिचाउलोदयं पि साहूणं देहि। अन्नेण वि जणणी भणिया सालिआयामं, सालिकंजियं च साहूणं देहि। इच्चाइबालाइजणजंपियं सोउं आहाकम्मं एयन्ति नाउं ते ताणि घराणि परिहरिऊण तत्थेव अडन्ति। अनिव्वाहे पच्चासन्ने गामे गंतूण भिक्खं अडन्ति"।

एवमशनोत्पादनसम्भववत् पानोत्पादनसम्भवोऽपि ज्ञेयस्तमपि कश्चित् कुरुते, कथम्? उच्यते—यथा क्वापि ग्रामे क्षेत्रप्रत्युपेक्षकाः साधव आगतास्तन्निवासिना श्रावकेण साध्रियमाणा अपि न स्थिताः। तेन च तन्मध्यादेक ऋजुकः साधुरनवस्थानकारणं पृष्टस्तेनोक्तमत्र क्षारं जलं तद्गुरूणां न प्रायोग्यमिति श्रुत्वा यावदसौ मिष्टजलमवटं खनित्वा लोकप्रवृत्तिजनितपापभयात् पुलकादिना स्थगितमुखेन तेन तावत् स्थितो यावत् साधवस्तत्रायातास्ततोऽसौ तंदुलधावनादितया कृत्वा तत्तेभ्यो दापयति वक्ति च गुर्वर्थमिमुखमेतद् भवद्भिः स्वयं पातव्यं साधूनां च दातव्यमित्यादि यावदन्यत्र तेऽपि व्रजन्तीति। एतदनुसारतः खादिमस्वादिमयोरप्याधाकर्म्मसम्भवो भावनीयः। तत्र खादिमे यथा कश्चित् साधूनां शालनकाद्यर्थं चिर्भिटाम्रफलबीजपूरकपित्थद्राक्षादाडिमा(मादी)नां वपनं करोति। स्वादिमे तु कश्चित् साधूनामौषधाद्यर्थं शुण्ठिमरिचहरीतक्यादीनां रोपणं करोतीति गाथार्थः ॥९॥

तदित्थमाधाकर्मणो विषयसम्भवावुक्तावथात्रैव 'कीरन्तं निट्ठियं चे'ति पदोपात्ताभ्यां कृतनिष्ठितशब्दाभ्यामुत्पन्नं कल्पाकल्प वे-भागकारिभङ्गचतुष्टयं प्रत्येकमशनादिविषयं वक्तुमाह—

**तस्स कड तस्स नेट्ठिय चउभङ्गो तत्थ दुचरेमा कप्पा। फासुकयं रद्धं वा नेट्ठियमेयरं कडं सव्वं ॥१०॥**

व्याख्या—अत्रानुस्वारलोपात्तस्य कृतं तस्य निष्ठितमित्यस्मिन् वाक्ये चतूरूपो भङ्गश्चतुर्भङ्गो भङ्गचतुष्टयं ज्ञेयम्। यद्वा प्राकृतत्वात्

ति पुनःशब्दलोपादितरत् पुनर्मुनेर्गृहिणो वा हेतोरतीतवर्त्तमानकालैक्यात् प्रासुकीकर्तुं प्रारब्धं । पुनरेकद्विष्कण्डिततण्डुलात्कृतं कृताभिधानं भवति अप्रासुकीभूतत्वेन प्राप्तनिष्ठितत्वमित्यर्थः । सव्वं समस्तमिति गाथार्थः ॥१०॥

एनमेवार्थं विशेषेणाह—

**साहुनिमेत्तं ववियाइ ता कडा जाव तंदुला दुछडा । तिछडा उ निट्ठिया पाणगाइ जहसम्भवं नेज्जा ॥**

व्याख्या—'साधुनिमित्तं' यतेरर्थाय 'ववियाइ' त्ति । अत्र पञ्चम्येकवचनस्य लुप्तत्वादुप्तादेरिति दृश्यम् । तत्रोप्तं वपनं तदादिः प्रथमं यस्य केदारगाहनलवनपरिमलतोत्पवनाद्युत्तरक्रियाविशेषस्य स उप्तादिस्तस्मादुप्तादेरारभ्येति शेषो, वपनमादायावधीकृतेत्यर्थः । तावदिति कालावधिनिर्देशे । 'कड'त्ति कृताभिधाना भण्यन्ते शालयः ।'यावदि'ति कालावध्युद्देशे । द्विश्च्छटा द्विष्कण्डितास्तादृशाः सन्तो लोके किं व्यपदेश्यास्ते स्युरित्याह । 'तन्दुल' त्ति, ते शालयश्च्छटितास्सन्तः तन्दुला भण्यते । अयमर्थः, साधुनिमित्तं शाल्यादय उप्ता यावत्तथाभूतपरिणामेनैव दात्रा व्रीहिकरटितया एकां द्वे वा वारे कण्डित्वा तन्दुलीकृतास्तावत्ते कृता अभिधीयन्ते । त्रिच्छटास्तु तिस्रो वाराः कण्डिता एव तंदुलाः तथाभूतपरिणामेनैव, तु शब्दः शालीनामेकद्विष्कण्डनेनानिष्ठितत्वावधारणार्थः, ते किमित्याह, निष्ठिता निष्ठिताख्या भण्यन्ते । ते च राद्धा अराद्धाश्च न कल्पन्ते साधुनिमित्तं निष्ठितत्वेनाधाकर्म्मिकत्वात् , उपलक्षणमेतत् शुद्धतन्दुलादिभिः साध्वर्थं राद्धं कूरादिकमपि निष्ठितमित्यस्य । अत्र वृद्धसम्प्रदायो यथा—यदि प्रथमां द्वितीयां वा वारां साधुनिमित्तमात्मनि निमित्तं वा करटिं छटित्वा तन्दुलाः कृतास्तृतीयां वारां त्वात्मनिमित्तं छटिता राद्धा वा ते साधूनां कल्पन्ते । यदि तु प्रथमां द्वितीयां वा वारां साधुनिमित्त स्वनिमित्तं वा तृतीयां वारां तु साधुनिमित्तमेव कण्डिता राद्धास्त्वात्मनेमेत्तं ते एकेषा-

कल्पते, यतः सूर्यहेतुकापि छाया भवति न च सा वृक्षारोपककर्त्रा सूर्येण वा साधून् मनस्याधाय निर्वर्त्तिता येनाधाकर्म्मलक्षणयोगात् सा तथा सत्ययोग्या स्यादित्यलमगीतार्थाधाकर्म्मिकयतिजनकथयेति गाथार्थः ॥११॥

द्वारमिति प्रभूतार्थसूचकं पदमित्यर्थः । उक्तमाद्यद्वारमिदानीं यस्येति द्वितीयद्वारं व्याचिख्यासुराह ।

**साहम्मियस्स पवयण लिंगेहि कए कयं हवइ कम्मं । पत्तेयबुद्ध निण्हय तित्थयरट्ठाए पुण कप्पे । १२ ।**

व्याख्या—साधर्मिकस्य समानस्वरूपस्य, समानधर्म्मा च दर्शनज्ञानादिनापि स्यादिति केनात्र समानधर्मते ? त्याह—पवयण-लिंगेहि त्ति प्रवचनं सङ्घः, साध्वादिचतुष्करूपस्तथा लिङ्ग्यते चिह्नयते साधुरनेनेति लिङ्गं यतिचिह्नं रजोहरणमुखवस्त्रिकागोच्छकादि । अनयोर्द्वन्द्वे अल्पस्वरस्यापि लिङ्गशब्दस्य पूर्वनिपाताभावो गाथाबन्धानुलोम्यात् क्वचिल्लक्षणाद् व्यभिचारात् प्राकृतत्वाच्च ताभ्याम् । अत्र च न केवलेन प्रवचनेन साधर्म्मिकता नापि केवलं लिङ्गेन किन्तु युगपद् द्वितीयमीलकेन ग्राह्या ततो रजोहरणादियतिलिङ्गो-पेतश्चतुर्विधसङ्घमध्यात् सङ्केतरश्च गृह्यमाणः साधुसाध्वीवर्ग एव साधर्मिकः सामर्थ्याल्लभ्यते । तस्य प्रवचनलिङ्गाभ्यां समानधर्म्मिणः साधुसाध्वीवर्गस्य किमित्याह—कृते निमित्तमर्थायेति यावत् कृतं राद्धं भवति जायते । कम्मं ति सूचनादाधाकर्म सामान्यकेवलिस्वयं-बुद्धसामान्यशेषयतिरूपाणां साधूनामितिशेषः । अत्र च प्रवचनलिङ्गपदद्वयेन चतुर्भङ्गी सूचिता, यथा प्रवचनतः साधर्मिका न लिङ्गतः १ लिङ्गतः साधर्म्मिका न प्रवचनतः २ प्रवचनतः साधर्म्मिका लिङ्गतश्च ३ न प्रवचनतः साधर्मिका न लिङ्गतश्चेति ४ । तत्राद्यभङ्गे दर्शनप्रतिमाया आरभ्य अन्त्यप्रतिमावर्जिताः प्रतिमादशकस्थाः श्रावकाः प्रवचनतः साधर्मिकाः, साधुभिः सह सदैव तेषां तैः सहैकप्रवचनत्वात् लिङ्गस्याभावेन वैसदृश्याच्च । इह चान्त्यप्रतिमास्था अपगतकेशत्वरजोहरणादिसाधुलिङ्गोपेतत्वाल्लिङ्गतोऽपि साध-

कल्पते, यतः सूर्यहेतुकापि छाया भवति न च सा वृक्षारोपककर्त्रा सूर्येण वा साधून् मनस्याधाय निर्वर्त्तिता येनाधाकर्म्मलक्षणयोगात् सा तथा सत्ययोग्या स्यादित्यलमगीतार्थाधाकर्म्मिकयतिजनकथयेति गाथार्थः ॥११॥

द्वारमिति प्रभूतार्थसूचकं पदमित्यर्थः । उक्तमाद्यद्वारमिदानीं यस्येति द्वितीयद्वारं व्याचिख्यासुराह ।

**साहम्मियस्स पवयणलिंगेहि कए कयं हवइ कम्मं । पत्तेयबुद्ध निण्हय तेत्थयरट्ठाए पुण कप्पे ॥१२॥**

व्याख्या—साधर्मिकस्य समानस्वरूपस्य, समानधर्म्मा च दर्शनज्ञानादिनापि स्यादिति केनात्र समानधर्मते ? त्याह—पवयण-

लिंगेहि त्ति प्रवचनं सङ्घः, साध्वादिचतुष्करूपस्तथा लिङ्ग्यते चिह्नयते साधुरनेनेति लिङ्गं यतिचिह्नं रजोहरणमुखवस्त्रिकागोच्छकादि ।

अनयोर्द्वन्द्वे अल्पस्वरस्यापि लिङ्गशब्दस्य पूर्वनिपाताभावो गाथाबन्धानुलोम्यात् क्वचिल्लक्षणाद् व्यभिचारात् प्राकृतत्वाच्च ताभ्याम् ।

अत्र च न केवलेन प्रवचनेन साधर्म्मिकता नापि केवलं लिङ्गेन किन्तु युगपद् द्वितीयमीलकेन ग्राह्या ततो रजोहरणादियतिलिङ्गो-

पेतश्चतुर्विधसङ्घमध्यात् सङ्घैकतरश्च गृह्यमाणः साधुसाध्वीवर्ग एव साधर्मिकः सामर्थ्याल्लभ्यते । तस्य प्रवचनलिङ्गाभ्यां समानधर्म्मिणः

साधुसाध्वीवर्गस्य किमित्याह—कृते निमित्तमर्थायेति यावत् कृतं राद्धं भवति जायते । कम्मं ति सूचनादाधाकर्म सामान्यकेवलिस्वयं-

बुद्धसामान्यशेषयतिरूपाणां साधूनामितिशेषः । अत्र च प्रवचनलिङ्गपदद्वयेन चतुर्भङ्गी सूचिता, यथा प्रवचनतः साधर्मिका न

लिङ्गतः १ लिङ्गतः साधर्म्मिका न प्रवचनतः २ प्रवचनतः साधर्म्मिका लिङ्गतश्च ३ न प्रवचनतः साधर्मिका न लिङ्गतश्चेति ४ ।

तत्राद्यभङ्गे दर्शनप्रतिमाया आरभ्य अन्त्यप्रतिमावर्जिताः प्रतिमादशकस्थाः श्रावकाः प्रवचनतः साधर्मिकाः, साधुभिः सह सदैव तेषां

तैः सहैकप्रवचनत्वात् लिङ्गस्याभावेन वैसदृश्याच्च । इह चान्त्यप्रतिमास्था अपगतकेशत्वरजोहरणादिसाधुलिङ्गोपेतत्वाल्लिङ्गतोऽपि साध-

घात्रपि । प्रत्येकबुद्धानां तु देवता समर्पयति । इदानीं प्रवचनलिङ्गचतुर्भङ्ग्या भङ्गकेषु कल्पाकल्पविधिरुच्यते । तत्र तृतीयभङ्गवर्त्ति-यत्यर्थं यत्कृतं तदकल्पम् प्रक्रान्तसाधूनां सर्व्वयतीनां तृतीयभङ्गत्वात् । चतुर्थभङ्गवर्त्तिसाध्वर्थं च कृतं कल्पमेव । अत एव सूत्रकारोऽपि तृतीयभङ्गेऽकल्पतां प्रदर्श्य एतद्वर्जशेषभङ्गत्रये कल्पाकल्पविभागं दर्शयितुमाह । 'पत्तेयबुद्ध'त्ति,प्रत्येकबुद्धनिह्नवतीर्थकराणामर्थाय प्रत्येकबुद्धादिनिमित्तं कृतमशनादि । पुनः शब्दः प्रथमद्वितीयभङ्गयोर्भजनया कल्पाकल्पविभागसूचनार्थः । अत एव द्वितीयभङ्गे भजनां प्रतीत्य सूत्रकृता निह्नवार्थाय कृतं कल्पमुक्तम् । 'कप्पे'त्ति कल्पते ग्राह्यं स्यादित्यर्थः । तथा च तीर्थकरार्थाय यत्कृतं देवैः समवसरणं देशनाश्रवणार्थमुपवेशनादिना यथा यतीनां परिभोगोचितं स्यादेवं तदर्थं कृतमशनाद्यपि कल्पते प्रक्रान्तसर्व्वयतीनामिति एतेन प्रत्येकबुद्धतीर्थकरार्थं कृतस्य कल्पताभणनाच्चतुर्थभङ्गे कल्पता दर्शिता । ननु यदि तीर्थकरार्थं कृतमाधाकर्म्म न स्यात्तदा यद्भक्त्या तदर्थं निष्पादितमनिश्राकृतं भवनं तत्र किमिति न निवासादि क्रियते ? उच्यते महाशातनादोषभावात् । उक्तं च 'जइ वि, न आहाकम्मं, भत्तिकयं तह विवज्जयंते हि । भत्ती खलु होइ कया, इहरा आसायणा परमा' ॥१॥ शेषयतीनामर्थाय च कृतं तीर्थकरादीनां कल्पते प्रवचनलिंगोत्तीर्णत्वात्तेषामिति । तीर्थकराद्यर्थं च कृतं तीर्थकरादीनामकल्पमेवेत्यनुक्तमपि दृश्यम् । तथा च व्याख्याप्रज्ञप्त्यां श्रूयते । गोशालकमुक्ततेजोलेश्याव्यथाजातातीसारस्य भगवतस्तद्व्यथोपशमनाय रेवतीश्राविकया वैद्यवचनेन स्वार्थं भगवदर्थाय च निष्पादिते औषधद्वये भगवद्व्यथावलोकनेनाधृतिं कुर्व्वाणस्य सिंहानगारस्य गृहार्थनिष्पन्नौषधानयनाय प्रेषितस्य तन्मुखेन स्वार्थनिष्पन्नस्य तस्य भगवते च क्रियमाणस्यानयननिषेधः । यदि च तत्तस्य कल्पं स्यात्तदा किमिति निषेधमकार्षीदसाविति एवं प्रत्येकबुद्धार्थं कृतं तेषामेव-तदकल्पं । यद्येवं तीर्थकरार्थं देवैः समवसरणादि कृतं कथमसावुपभुङ्क्ते ? उच्यते, तीर्थकरनामकर्म्मविपाकस्येत्थं तेन वेद्यमानत्वाद्-

दोषः । नन्वनेकायतप्रविभक्तस्वभावकानामपि तृतीयभङ्गवर्तित्वात्तदर्थं कृतमशनादि साधूनां कल्पमकल्प्यं वा ? उच्यते, पुरस्तात्स्वपाखण्डीषितकल्पित्वात्तेषां तदर्थं कृतमशनादि साधूनां कल्पत एवेति दृश्यम् । केचित्साधुकल्पत्वात्तेषामपि भक्तं न कल्पन्ते । तन्मतेनैते सर्वसाधुप्रवचनाभावाः । प्रथमद्वितीयभङ्गभावना स्वयं ज्ञेया । यदेकानेकप्रतिमाएयमर्थमाधाकर्म कृतमशनादिकं प्रकल्प्यसाधूनां कल्प्यं गुरुस्वसाक्षिकत्वात्तेषां । चौरादिभूपितकल्पिकसाध्यर्थं कृतं स्वकल्प्यं भावतो लिङ्गयुक्तसाधुत्वात्तेषामिति प्रथमभङ्गे भावना । द्वितीये स्वयं, यथा लोके निह्नवा लिङ्गयरेण यदि जाता स्तुस्वता तदर्थं कृतं कल्प्यं सहत्वाभावात् तेषां, यदि स्वभावास्तदा कल्प्यम्, तेषां व्यवहारेण सहान्वर्थचित्वात् । अथ यथा कश्चित् सेनाभियषिभावेः साधोर्जीवतो मृतस्य वा कालमयी पाताप्रादिमयी प्रतिमां वा कारयति, तस्यामाग्रतो ढौकनाय वस्त्रादिकं निष्पादयति, तदा तस्याः कन्येषां तत्समानधर्माणां जीवतां स्थापनासाधर्मिकत्वात् तत्पुरतो ढौकितमढौकितं वा वस्त्रादिकं साधूनां कल्प्यमकल्प्यं वा ? अत्रोच्यते, एवोद्धरणादियुक्तत्वात् पितृपुत्रस्यैवेदं दातव्यमिति बहुः सहृत्यनेन कृतत्वात् तु तत्साधूनामकल्प्यम् पितृपुत्रसाधवे दास्यामीति साधुसङ्कल्पेन कृतत्वात् । भक्तिमात्रकृतं तु साधुसङ्कल्परहितं कल्प्यं (कं) यतिप्रसङ्गदोषात् (कल्प्यं)न स्यात् । एवं तत्साधुमृतस्य साधो निर्जीवशरीरस्य तत्पुरतस्तिना पुरतो ढौकनाय कृतमशनादि ढौकितमढौकितं वा साधुसङ्कल्परहितमपि तदकल्प्यं यतो निमाहका शिवपदा ये मृतकभक्तमपि न स्वधन्त्रीस्वादितदुगुप्साप्रसङ्गापरिहारस्तं विस्तरेण इति गाथार्थः ॥१२॥

उक्तं पस्सेतिद्वारमथ पञ्चेति द्वारं व्याचिख्यासुः ये: प्रकारैस्तत् स्यात्तान् प्रकारान् प्रतिषेधादीन् सदृष्टान्तानभिधातुमाह—

परिसेवण १परिसुणणा २संवास ३अणुमोयणेहिं ४तं होइ । इह तेण १रायसुय २पल्लि ३रायदुट्ठेहिं दिट्ठंता ॥

न्याख्या—प्रतिपेवणं प्रतिपेवणा प्रतिपेवेत्येकोऽर्थः, आसेवेति तत्त्वं। प्रतिश्रवणं प्रतिश्रवणा अभ्युपगमाः। संवसनं संवासः एक-
त्रावस्थानम्। अनुमोदनमनुमोदना अनुमतिः। प्रतिपेवणा च प्रतिश्रवणा चेत्यादि द्वन्द्वस्ताभिः प्रतिपेवणादिभिरासेवाप्रभृतिभिश्च-
तुर्भिः प्रकारैस्तदित्याधाकर्म्म तद्भोगादिजन्यः कर्म्मबन्ध इति तत्त्वं, भवति जायते। एतासां स्वरूपं सूत्रकार एव वक्ष्यति। अधुनैत-
द्विषयान् दृष्टान्तानाह। इहेति आस्वेतासु प्रतिपेवणादिषु यथाक्रमं स्तेनराजसुतपल्लीराजदुष्टैर्दृष्टान्ता उदाहरणानि वाच्यानि। तत्र प्रति-
पेवणायां, स्तेनाश्चौरा दृष्टान्त इति सर्वत्र योज्यम्। प्रतिश्रवणायां, राजसुतो नृपपुत्रः। संवासे पल्ली, भिल्लसन्निवेशः। अनुमोदनायां
राजदुष्टो नृपावरोधापराधकारीति। एतांश्च प्रतिश्रवणादिस्वरूपाभिधायकं गाथाद्वयं व्याख्याय ग्रन्थविस्तरलाघवार्थं विनेयासंमोहार्थं
च पश्चाद् वक्ष्याम इति गाथार्थः ॥१३॥

अधुना प्रतिपेवणादिस्वरूपाभिधानायाह—

**दक्खिन्ना दुवओगे, भणिओ लाभो त्ति पडिसुणणा॥**
**सयमन्नेण च दिन्नं, कम्मियमसणाइ खाइ पडिसेवा।**
**संवासो सहवासो, कम्मियभोइहिं तप्पसंसाउ। अणुमोयण त्ति तो ते, तं च चए तिविहतिविहेण॥१५॥**

न्याख्या—स्वयमात्मना गृहादानीयान्येन वा अपरसाधुना, वा विकल्पे, दत्तं गृहादानीयान्यस्य साधोः समर्पितमाधाकर्म्मिकं
पूर्वोक्तमशनादि भक्तादिकं खादत्यश्नाति यः साधुस्तस्य प्रतिपेवा भवति। अयमभिप्रायः-इहाकृत्यमाधाकर्म्मासेवनमेतदिति केनापि नि-
वार्यमाणोऽपि रसगृद्ध्या तद्वचोऽवगणय्य कूटोपमां च तदग्रतोऽभिधाय यथा परहस्तेनाङ्गारानाकर्षयन् यथासौ न दह्यते किन्तु पर-

ख्यामः। एव शेषाख्यानकान्यपि। तत्र प्रतिषेवायां चौरदृष्टांतो यथा–एगंमि गामे अणेगे चोरा वसन्ति ते य अन्नया कुओवि संनिवेसाउ गावीउ हरिऊण नियगामाभिमुहं चलिया। तत्थ केवि पहिया मिलिया, जाहे सदेसे पविट्ठा, तउ नियमंडलो त्ति काउं निब्भया भोयणवेलाए, तेसिं गोणीणं मज्झाउ कत्तियाउ विणासिऊण भोयणत्थं पएउं लग्गा तंमि पत्थावे के वि पहिआ अन्नेवि मिलिया, भोयणकरणत्थं सव्वेवि चोरेहिं भोत्तुकामेहिं निमंतिया ततो केइ भुंजिउं पयट्टा, केहिं वि गोमंसभक्खणं बहु पावं ति काउं सयं भक्खणं न कयं किंतु परिवेसणाइ पारद्धं। एत्थन्तरे कूविया आगया, तेहिं सव्वे ते गहिया तत्थ जे पहिआ आसि ते पहिया अम्हे त्ति भणन्ता वि गोमंसभक्खणपरिवेसणादिदोसेण ते वि इयरे वि तेहिं वहियत्ति। एवमिहापि ये आधाकर्म्मानीय स्वयं भुञ्जते ये च तत्परिवेषयन्ति ये च तद्ग्रहणाय पात्राणि धरन्ति ते एवं कुर्व्वन्तस्सर्व्वेऽपीह जन्मनि तीव्रं कर्म्म बद्ध्वा दुर्गतौ पर्यटन्तीति। दृष्टान्तदार्ष्टान्तिकयोजनात्वेवम्, यथा चौरस्थानीया आधाकर्म्मनिमन्त्रकाः साधवः, भुङ्ग्ध्वं यूयमिति निमन्त्रिता वा ये भुञ्जते ये च तत्परिवेषयन्ति ये च तद्ग्रहणाय पात्राणि धरन्ति ते एवं कुर्व्वन्तस्सर्व्वेऽपीह जन्मनि तीव्रं कर्म्म बद्ध्वा दुर्गतौ पर्यटन्तीति। दृष्टान्तदार्ष्टान्तिकयोजनात्वेवम्, यथा चौरस्थानीया आधाकर्म्मनिमन्त्रकाः साधवः, गोमांसपरिवेषकपथिकादिस्थानीया आधाकर्म्मपरिवेषकादिसाधवो, गोमांसभक्षकपथिकस्थानीया निमन्त्रिताधाकर्म्मभोजिसाधवो, गोमांसपरिवेषकपथिकादिस्थानीया आधाकर्म्मपरिवेषकादिसाधवो, कूजिकस्थानीयानि कर्म्माणि, मरणादिस्थानीयो नरकादिपातः। पथस्थानीयं मनुष्यजन्म, साभ्यवहारस्थानीयमाधाकर्म्माभ्यवहरणम्। प्रकृतं तत्र दृष्टान्ते चौरैर्गोभक्षकपथिकैश्च दार्ष्टान्तिके त्वाधाकर्म्मभोक्तृसाधुभिस्तन्निमन्त्रिताधाकर्म्मभोक्तृसाधुभिश्च इह दृष्टान्ते चौरैर्गोभक्षकपथिकैश्च दार्ष्टान्तिके त्वाधाकर्म्मभोक्तृसाधुभिस्तन्निमन्त्रिताधाकर्म्मभोक्तृसाधुभिश्च प्रतिषेधादयश्चत्वारोऽपि वाच्या-गोमक्षकपथिकानां दार्ष्टान्तिके त्वाधाकर्म्मानीय स्वयं भोक्तृसाधूनां च निमन्त्रितभोक्तृसाधूनां च गोमांसभक्षणपरिषेवणादिक्रियाप्रवृत्त्या निषेवणेन त्वत्र पथिकानां गोमांसभक्षणं प्रतिषेवणा। तेषामेव भोजनार्थं चौरैर्निमन्त्रितानां गोमांसभक्षणपरिषेवणादिक्रियाप्रवृत्त्या निषेवणेन तत्परिभोगं प्रतिप्रवर्त्तकत्वात् प्रतिश्रवणा। चौरैः सार्द्धमेकत्र निवसनेन संवासः। तेष्वेव बहुमानादनुमोदना स्यात्। यतिजनेष्वाधा-

प्रतिषेवणावदनुमोदना यावद्वाक्यमिति । संवासे पल्लीदृष्टान्तो यथा—वसंतउरं नयरं
नानिषेधकत्वादिना प्रवर्त्तकत्वेन प्रतिश्रवणा, शेषं प्रतिषेवणावदनुमोदना यावद्वाक्यमिति । अत्थि एगा भिल्लपल्ली । तत्थय बहवे
आसि । तत्थ य अरिमद्दणो नाम राया । इउ य तस्स राइणो देसस्स पच्चासन्ना विसगिरिसंनिविट्ठा पल्लीए पविसन्ति । सा य न केणइ राइणो साम-
चोरा वणियबंभणाइणो वसन्ति । ते य चोरा सयावि तस्स राइणो मंडले चोरियं काउं सयमेव गंतूण राइणा पल्ली गहिया । तीए गिज्झ-
न्ताइणो जेत्तुं सक्किज्जइ । अन्नया अमरिस्साझरियहियियेण महासमग्गियं काऊण अम्हं अचोराणं राया न किंचि करेहि त्ति ते न नट्ठा । राइणा
माणीए चोरा केवि हया, केवि नट्ठा । वणियबंभणाइएहिं चिन्तियं जहा अम्हं तुब्भे चोरेहिंतो वि अवराहिणो,जे अम्हाणं
ते वि गहाविया । तेहिं भणियं जहा देव! अम्हे वणियबंभणाइणो न चोरा । राइणा वुत्तं तुब्भे संयमवता साधुना न वस्तव्यम् ।
अवराहकारीहिं चोरेहिं सह एगत्थ वसह । तउ निग्गहिय त्ति । एवमिहाप्याधाकर्म्मिकभोक्तृभिस्सह संयमवता साधुना न वस्तव्यम् ।
संयमभ्रंशादिदोषसद्भावात्, तथाहि ते आधाकर्म्मणो अवलोकनेन गंधेन गुणवर्णनेन चाधाकर्म्मवर्जकमभिष्वङ्गविकृत्यादिपरिभोगर-
हितमपि साधुमाधाकर्मपरिभोगवाञ्छाकारिणं कुर्वन्तीत्येतैः सह संवासो दूरतस्त्याज्यः । अत्र दृष्टान्तदार्ष्टान्तिकयोजना यथा—नृपस्था-
नीयानि कर्म्माणि, पल्लीस्थानीया वसतिश्चौरस्थानीया आधाकर्म्मभोजिसाधवो, वणिगादिस्थानीया आधाकर्म्मभोक्तृभिस्सहवासिसाधवः
उपालम्भमरणस्थानीया दुर्गतिः । इह वणिग्ब्राह्मणादिभिः सहवासदुष्टसाधुभिश्च प्रकृतं । तत्र चौराणामाधाकर्म्मभोक्तृसाधूनां च पूर्व-
वत् प्रतिषेवणादयश्चत्वारोऽपि भावनीयाः । अनुमोदनायां राजदुष्टदृष्टान्तो यथा । एगंमि नयरे एगो वणियकुमारो अतीव सुरूवो
अत्थि सो य अतीव परमहिलाभिलासी । अन्नया अंतेउरसमीवं गच्छन्तो अंतेउरियाहिं दिट्ठो । तेण य ताउ दिट्ठाउ । परोप्परं अणुराओ
जाओ । ततो दिन्नजोएणं कहवि संपत्ती । एसो पइदिणं ताउ आसेविउं पयट्टो । पच्छा रन्ना नाओ । तउ आहरिय विभूसिय अन्तेउरे

पविट्ठो समाणो, दवावेऊण माहणेऊण य नयरमज्झे परिभमाविओ। तत्थ य कप्पडियवेसेण हेरिया मुक्का, भणिया य जहा जे एवं परुवंति निवसन्ति य ते दो वि तुब्भेहिं मम समासे आणेयव्वा। सो य लोगेण पेच्छिओ, दुव्वं आमिऊण एगेण भणियं 'अहह जीवलोए सपक्खेण वि नरेण मरियव्वं' एवं ताउ अंतेउरियाउ अम्हारिसेहिं अहहेहिं नयणेहिं पि न दीसन्ति वा एवमाभिऊण भओ ताए न गओ। अन्नेहिं भणियं अधन्नो एसो उभयलोगविरुद्धचारी, जो अणवीइयमाणं निवसामियंतेउरियाणं जुओ। एवं लोउं हेरिएहिं पच्चक्खेहिं होऊण रन्नो समप्पिया। राइणा उ, जेहिं सो वर्त्तसियो ते वावाइया इयरे मुक्क पूइया य त्ति। एवमिहाप्येके साधव आधाकर्म दधते, अपरे च भक्ष्यन्ति धन्या एवं सुखं जीवन्ति, अन्ये तु सुखं विगेसान् ये आगमनिषिद्धमाहारं भुञ्जते। अत्रोपनयः अन्तःपुरस्थानीयमाधाकर्म, तत्सेवकाभिरक्षस्थानीयास्तत्सेवकाः साधवः। धन्योऽयमिति वक्तृपुरुषस्थानीयास्तत्तोषका अनुमोदकाः साधवः। अधन्योऽयमिति वक्तृपुरुषस्थानीयास्तत्तेषामनुमोदकाः साधवः। नृपस्थानीयानि कर्माणि। मरणस्थानीयः संसार इह दृष्टान्ते येऽनुना यत्र उक्तो दार्ष्टान्तिके तु येऽधाकर्मभोजिनः स्थापितास्तेऽपराध्यन्ते। यत्र दृष्टान्ते पूर्वो दार्ष्टान्तिके तु येऽधाकर्मभोजिना प्रतिसेवनादयश्चत्वारोऽपि पूर्ववद् भावनीयाः। एवमः प्रतिसेवनादयश्चत्वारोऽपि समस्ता अप्रस्तुताः। साम्प्रतमेतेषां प्रदातिसन्मानेन बहुदोषदुष्टत्वादाधाकर्मिककेतुत्वात्य परिहार्यतां दर्शयन्नाह। तो ते तं च वए त्ति। यतः पूर्वोक्ता दुर्गतिपातादिदोषनिबन्धनाः प्रतिसेवनादयस्ततः सर्वाणाम् प्रतिसेवनादीनामुरु चतुरः प्रकारान् आधाकर्मभोजिसाधुत्वात् तमिति आधाकर्म त्वमशनाद्यप्रकारं च: ग्रहणमे त्यजेत् परिहरेत् साधुः, कथमित्याह। 'तिविहतिविहेण' त्ति त्रयो विधा भेदा यस्य मनःप्रभृतिकस्य योगसमुदायस्य स त्रिविधः। तथा त्रयो विधा यस्य करणादिरूपस्य समुदायस्य स त्रिविधः। ततस्त्रिविधश्च त्रिविधश्चेति समाहारद्वन्द्वो नपुंस-

कत्वादेकवचनम् तेन, यद्वा त्रिविधस्य त्रिविध इति विग्रहस्तेन, अयमर्थः—मनोवाक्कायैः प्रत्येकं करणकारणानुमतिविशिष्टस्त्यजेदिति गाथार्थः ॥१५॥

उक्तं तृतीयं सप्रपञ्चं यथेतिद्वारमिदानीं यादृशमिति चतुर्थं द्वारं व्याचिख्यासुराह ।

**वंतुच्चारसुरागोमंससममिमं ते तेण तज्जुत्तं । पत्तं पि कयतेकप्पं कप्पइ पुव्वं करिसघट्टं ॥१६॥**

व्याख्या—वान्तं भुक्तोद्गिलितं, उच्चारः पुरीषं, सुरा मद्यम्, गोमांसं सुरभिपिशितं उपलक्षणत्वात् काकमांसगड्डरिकोष्ट्रीक्षीरलशुनादिग्रहः । वान्तं चोच्चारश्चेत्यादिद्वन्द्वस्तैः समं सदृशं तुल्यमिति यावत् । इदं प्रक्रान्तमाधाकर्म्मिकभक्तादि वर्त्तत इति शेषः। अत्रायं भावार्थः—यथा राजिकादिभिः कृतातिसंरम्यादिकमपि वान्तमभक्ष्यम्, उच्चारो यथा अभोज्यः, सुरोष्ट्रीगड्डरिकाक्षीरादि यथा शिष्टानामपेयम्, गोमांसादि च यथा तेषामभक्ष्यम्, जघन्यजनैश्च सुरागोमांसादेर्यद्यपि पानं भक्षणं चाचर्यते तथापि तन्न प्रमाणं शिष्टानाम्, अन्यथा वान्तोच्चारादीनामपि सारमेयादिभिर्भोजने आचरितत्वात्तेषामपि भक्ष्यत्वे प्रसङ्गः । एवं जिनशासनभावितानां साधूनां सावद्यत्वेन निन्द्यत्वादाधाकर्मिकमपि वान्तादिकल्पमभक्ष्यमपेयमग्राह्यं चेति । तथा यत इदं वान्तादिसदृशमित्यतः कारणात्, तेनेति आधाकर्म्मणाऽशनादिना तच्छुद्धमशनादिकं युक्तं स्पृष्टं मिलितं सदित्यर्थः । तच्च तद्युक्तं च तद्युक्तं, पूतिकर्म्मीभूतमिति तत्वं, साधूनां भोक्तुं न कल्पते इति शेषः । यथाऽशुचिसम्बन्धिना लवेनापि स्पृष्टं भक्तादि शुचीभूतमप्यभोज्यं भवति, एवं निर्दोषतया भोज्योऽप्याहारः आधाकर्म्मिकाहारस्य लवेनापि स्पृष्टोऽभोज्यः स्यात् पूतिरूपत्वात् तथा पात्रमपि भाजनमपि यत्राधाकर्म्मिकं केवलं पतितं, शुद्धाशनादिमध्येऽशुद्धं वा, तद्द्वयोरप्युज्झितयोरधाविततया, पूतिखरण्टितं सदित्यर्थः, न कल्पते परिभोक्तुं साधूनामिति शेषः । न केवलं

गुरुतमदोषत्वं क्रमेण ज्ञेयम्। तथाहि—कश्चित् साधुरतिक्रमाख्यं दोषं प्राप्तः सन् स्तोकेनापि शुभाध्यवसायेन तं दोषं विशोध्य आत्मानं संयमे व्यवस्थापयति । व्यतिक्रमदोषं तु प्राप्तः सन् गुरुणा शुभाध्यवसायेन, अतीचारदोषं तु गुरुतरेण शुभाध्यवसायेन विशोधयितुं शक्नोति । अनाचारदोषे तु यद्विषयोऽनाचारस्सेवितस्तं संयमगुणं गुरुतमेनापि शुभाध्यवसायेनाखण्डं साधुर्न प्राप्नोतीति । इह च क्रमशश्चतुर्ष्वप्यतिक्रमादिषु जातेषु प्राय आधाकर्म्माहाराभ्यवहाराः सम्भवन्ति । ततो यदा तद्ग्रहणायातिक्रमादिषु वर्त्तते, तदैवाज्ञाभङ्गादिष्वपि चतुर्षु वर्त्तते इत्यधुना तानाह—'आणाभङ्गे'त्यादि, आज्ञाभङ्गः सर्वज्ञोपदेशखण्डना, अनवस्थाऽऽधाकर्मिकपरिहारेऽन्येषामनास्था, मिथ्यात्वं विपर्यस्ताध्यवसायरूपं, विराधना संयमादेर्विघातस्तत आज्ञाभङ्गश्चेत्यादिद्वन्द्वस्ताश्च, चः समुच्चये, भवेयुर्जायेरन् । एतेषां च स्वरूपं सूत्रकृदुक्तातिक्रमादिस्वरूपादुपरिष्टाद्वयं वक्ष्यामः इति गाथार्थः ॥१७॥

इदानीं अतिक्रमादीनां स्वरूपं निरूपयितुमाह ।

**आहाकम्मामंतण पडिसुणमाणे अइक्कमो होइ । पयभेयाइ वइक्कम गहिए तइएयरो गिलिए ॥१८॥**

व्याख्या—विभक्तिलोपादाधाकर्म्मणि पूर्व्वोक्ते आमन्त्रणे गृहाणेदमिति गृहस्थाभ्यर्थने सति प्रतिशृण्वति गृहीष्यामीति जल्पत्यनिषेधेन मौनावलम्बिनि वा सति साधौ यावन्नाद्यापि तद्ग्रहणाय चलति तावदतिक्रमो मनाक् चारित्रधर्म्मोल्लङ्घनं भवति । ततः पदस्य चरणस्य भेदस्तद्ग्रहणार्थं गमनायोत्पाटनं पदभेदः, स आदिर्यस्य तद्ग्रहगमनादेस्तत् पदभेदादि विभक्तिलोपात्तस्मिन् विहिते सति यावत् तन्न गृह्णाति तावद् व्यतिक्रमः, पूर्व्वस्माद्गुरुश्चरणेऽपराधो भवति । ततो गृहीते पात्रकादौ स्वीकृते सत्याधाकर्म्मणि यावत् मुखे न प्रक्षिपति तावत् सत्यागमनादावपि कृते तृतीयोऽतिचारो गुरुतरश्चरणापराधः । तत इतरोऽनाचारो गुरुतम-

व्याख्या—यतः संयमोद्योगवतः साधोः, किमित्याह चरणं विहन्तुं शीलमस्येति चरणविघाति चारित्रविनाशकृदाधाकर्मिका-
शनादि वर्त्तते इत्यनेन कारणेन दानं वितरणमेतस्याशनादेराधाकर्म्मणो नास्ति न विद्यते गृहिण ओघेन सामान्येन कारणं विनेति
यावत्। उपलक्षणत्वाचद्दायकशुभाल्पायुर्बन्धनिबन्धनं चेदमिति द्रष्टव्यम्। तथा च प्रज्ञप्त्यां सुपात्रमाश्रित्याशुद्धदानस्य फलम-
भिहितम्। यथा–'कहं णं भंते! जीवा अप्पाउयत्ताए, कम्मं पकरेंति। गोयमा! पाणे अइवाइत्ता मुसं वइत्ता तहारूवं समणं वा माहणं
वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभित्ता। एवं खलु जीवा अप्पाउयत्ताए कम्मं पकरेंति'। अस्यार्थः,
तत्र प्रश्नः सुगमः। उत्तरे तु 'पाणे अइवाइत्त'त्ति प्राणानतिपात्य आधाकर्मादिकरणतो विनाश्य, मृषोक्त्वा यथाहो! साधो! स्वार्थ-
सिद्धमिदं भक्तादि, कल्पनीयं वो, न शङ्का कार्या इत्याद्यनृतमभिधायाऽप्रासुकानेषणीयेनाशनादिना चतुर्विधाहारेण। 'तहारूवंत्ति'
तथाविधस्वभावं भक्तिदानोचितपात्रमित्यर्थः। श्रमणं तपःखिन्नदेहं, 'माहणं व'त्ति मा हनेत्येवं योऽन्यं प्रति वक्ति, स्वयं हनननिवृत्तः
सन्नसौ माहनः, पचाद्यच् तं माहनं, यद्वा ब्रह्मचर्यं कुशलानुष्ठानं वा तदस्यास्तीति ब्राह्मणः अस्त्यर्थेऽण्, एवमादित्वात् तं ब्राह्मणं
ब्रह्मचर्यादिगुणगणोपेतमित्यर्थः। वा शब्दः परस्परापेक्षया समुच्चये। प्रतिलम्भ्योपष्टम्य लाभवन्तं कृत्वेत्यर्थः। यद्वा ये जीवा जिनसाधु-
गुणपक्षपातितया पूजाद्यर्थं पृथिव्याद्यारम्भेण वर्त्तमानाः प्राणानतिपात्य पूजाद्यर्थमेव न्यासापहारादिना च वर्त्तमाना, मृषोक्त्वा श्रमणस्य
संस्तरणे सत्यपि निष्कारणतो भक्तिमात्रेणाप्रासुकानेषणीयाशनादिचतुर्विधाहारेण श्रमणं च प्रतिलभ्येति व्याख्या। ततः सरागसंय-
मनिरवद्यदाननिमित्तायुष्कापेक्षयाऽल्पायुष्कतयाऽल्पजीवितव्यहेतुतया जीवा आयुःकर्म बध्नन्ति। तथा च जिनागमाभिसंस्कृतमतयो
यतयः प्रथमवयःसंभोगिनं कंचन मृतं दृष्ट्वा वक्तारो भवन्ति। नूनमनेन भवान्तरे किञ्चिदशुभं प्राणघातादिकमासेवितमकल्प्यं वा

भोक्तुमभिलषति, वैद्यादिकं च याचते, तच्च तस्य गृह्णतोऽन्यस्य ददतश्च तत्प्रस्तावे यथा द्वयोरप्यनर्थकृत् तथा तदेव भस्मकवाताद्युपहतस्य निरामयवाताद्युद्भवज्वरिणो गृह्णत इतरस्य ददतश्च गुणकृत् तदुक्तं वैद्यशास्त्रे—'उत्पद्येत हि सावस्था, देशकालामयान् प्रति। यस्यामकार्यं कार्यं स्यात् कर्म्मकार्यं च वर्जयेत्' ॥१॥ अकार्यमकर्तव्यं यत्तदपि कार्यं कर्त्तव्यं स्यात्, कर्म्मकार्यं कर्त्तव्यक्रियामित्यर्थः। एवं अशुद्धाशनादिदानमपि सति निर्वाहे द्वयोरप्यनिष्टकार्यऽसति तस्मिंस्तदेवाभीष्टार्थलाभकारीति। तदयं परमार्थो—यद्यप्याधाकर्माज्ञाभङ्गाद्यनेकदोषहेतुकं वर्णितम्, तथापि 'सव्वत्थ संजमं संजमाउ अप्पाणमेव रक्खेज्जे'त्यादि 'अप्पेण बहुमेसेज्जा। एयं पंडियलक्खणं सव्वासु पडिसेवासु एयमत्थपयं विऊ। तथा न वि किंचि अणुण्णायं पडिसिद्धं वावी'त्याद्यागमाभिज्ञैर्यथावसरं बहुतरगुणलाभाकाङ्क्षया गृह्यमाणं दीयमानं च न दोषाय इति गाथार्थः ॥२१॥

अधुना यदुक्तं 'पत्तविसेसे व होज'त्ति, तत्र सुपात्रमाश्रित्य गृहिणस्तद्दानसम्भवमावेदयन्नाह—

**भणियं च पंचमङ्गे सुपत्तसुद्धन्नदाणचउभङ्गे। पढमो सुध्धो बीए भयणा सेसा अणिट्ठफला ॥२२॥**

व्याख्या—भणितं च उक्तं च पञ्चमाङ्गे व्याख्याप्रज्ञप्त्यां क्वस्थाने इत्याह—सुपात्रशुद्धान्नदानचतुर्भङ्ग इति। तत्र सुपात्रं पूर्वोक्तं, शुद्धमेषणीयं यदन्नमशनमुपलक्षणत्वात् पानादिग्रहः। तस्य दानं गृहिणा वितरणं शुद्धान्नदानं ततः सुपात्रं च शुद्धान्नदानं चेति विग्रहः, ताभ्यां पदाभ्यां चतुर्भङ्गो भङ्गचतुष्टयम्। यथा सुपात्रं सुदानं १। सुपात्रमशुद्धदानं २। कुपात्रं शुद्धदानं ३। कुपात्रं कुदानं ४ इत्येवंरूपः सुपात्रशुद्धान्नदानचतुर्भङ्गस्तस्मिन्, यद्वा सुपात्रे सुपात्राय वा शुद्धान्नदानमेषणीयाहारवितरणं तद्विषयश्चतुर्भङ्गस्तस्मिन्निति व्याख्येयम्। अधुना यदुक्तं पञ्चमाङ्गे तद्दर्शयितुमाह—प्रथम आद्यो भङ्गः शुद्धः, सुपात्रसद्भावात् साध्वर्थपाका-

माश्रित्याकारणेऽपि भावप्रकर्षविशेषादप्रासुकानेषणीयादेरपीदं फलं न विरुध्यते, अचिंत्यत्वाच्चित्तपरिणतेरिति सम्भाव्यते, अत एतद् भगवतीवचनाद् ज्ञायते। सुपात्रमाश्रित्यानेषणीयदानमपि भक्तितरलितचित्तत्वेन ददतः कदाचिन्न तथाविधबहुदोषकारीति सुपात्रे तदपि कदाचिद् गृहिणः सम्भवतीत्यावेदितम्। तथा 'समणोवासगस्स णं भंते! तहारूवं असंजयअविरयअपडिहयपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा असण ४ पडिलाभेमाणस्स किं कज्जइ? हंता गोयमा! एगंत सो पावे कम्मे कज्जइ नत्थि से कावि णिज्जरा'। सुगमं चैतत्, नवरं असंयतः सप्तदशप्रकारसंयमाद् बहिर्भूतः। तथा विविधमनेकधा द्वादशविधे तपसि रतो विरतस्तन्निषेधादविरतः, तथा प्रतिहता निर्ग्रन्थभेदेन स्थितिह्रासात् प्रत्याख्यातानि हेत्वभावतः पुनर्वृद्धिनिरोधात् पापकर्म्माणि ज्ञानावरणादीनि येन स तथा तन्निषेधादप्रतिहतप्रत्याख्यातपापकर्म्मा तम्। एवं चासंजयेत्यादिना निर्गुणः पात्रविशेष उक्तो। अनेन च तृतीयचतुर्थभङ्गावनेनैव दण्डकेन तुल्यफलत्वादुक्तौ। तृतीयभङ्गे सुदानस्यापि कुपात्राश्रितत्वादुभयाशुद्धभङ्गफलवद्यथोक्तफलत्वमेव। असंयमोपष्टम्भस्योभयत्रापि तुल्यत्वात् पश्चात्प्रासुकादौ जीवघाताभावेन अप्रासुकादौ च जीवघातसद्भावेन विशेषः। सोऽत्र न विवक्षितः पापकर्म्मणो निर्जराया अभावस्यैव चेह विवक्षितत्वादित्यलं प्रसङ्गेनेति गाथार्थः ॥२२॥

इदानीं यथापृच्छेति सप्तमं द्वारं व्याचिख्यासुराह—

**देसाणुचियं बहुदव्वमप्पकुलमायरो य तो पुच्छे कस्स कए केण कयं लक्खिज्जइ वज्झलिंगेहिं ॥२३॥**

व्याख्या—देशः सुराष्ट्रमालकप्रभृतिको मण्डलः। सोऽनुचितोऽयोग्यस्तस्मिन्, तस्याभावाद् यस्य देयवस्तुनस्तद्देशानुचितम् आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य पूर्व्वनिपाताभावो, यद्वा देशस्यानुचितं तत्र तस्यासम्भवाद् अयोग्यं, देशानुचितमिति विग्रहः।

ध्यामः। किं च सर्वदोषविषयशुद्ध्यशुद्धिपरिज्ञानकारणमुपयुक्ततैव। ततः संयमविघातकारिषु शुभेष्वशुभेषु वा शब्दादिष्विन्द्रियपथं स्वंस्वमवतीर्णेषु रागद्वेषाकरणतः तेषु अदत्तमना भिक्षाचर्यायां प्रविष्टो मुनिः भिक्षाविषयैषणायामेव दत्तमना भवेत् मण्डितालंकृतवधूष्वदत्तावधानो नीरनीरणयोरेव कृतावधानो गोवत्सक इवेत्यत्राख्यानकं यथा।

'एगंमि नयरे एगो समिद्धो सेट्ठी आसि तेण पहाणमन्दिरं कारियम्। तस्स बहवे पुत्ता, वहुयाउ य वहुयाउ, कालेण सेट्ठिणीए पञ्चत्तमुवगयाए गिहतत्ति कारियाउ जायाउ, तेसिं तु एगा गावी पउरदुद्धा सवच्छा आसि। सा य दिवसे बाहिं चरणत्थं पट्ठविज्जइ। वच्छो उ गिहे धरिज्जइ। तस्स य सव्वा वहुयाउ नीरणं पाणियं च ढोइंति। अन्नया तग्गिहे नियपुत्तस्स विवाहो उवट्ठिओ तत्थ ताउ सविसेसं आहरियविभूसियाउ ताणं सपरेसिं मण्डणवावडाणं वीसरिओ वच्छो न य तस्स एगाए नीरणं वा पाणियं वा ढोइयं। जाव मज्झन्ने सेट्ठी समागओ तं दट्ठुं वच्छओ रंजिउं लग्गो तेन नायं जहा अज्ज मुक्खिओ एस चिट्ठइ। वहुयाउ निब्भच्छियाउ तओ जेट्ठा वहू ससंभमंता नीरणपाणियं गहाय वच्छाभिमुहं चलिया। तओ वच्छो न तारिसं वाहिं समलंकियं भवणं (वयणं) जोएइ किंतु नीरणपाणियं एगाए दिट्ठीए झायमाणो अवलोएइ जाव लद्धंति'।

अत्रोपनयो यथासौ गोवत्सो निजाहारे मूर्च्छितो गृद्धश्च दत्तावधानो न पूर्वोक्तस्वरूपं गृहं नापि कृतशृङ्गारालङ्कारा वधूः पश्यति। किं तर्हि गोभक्तमेवावलोकयतीत्येवं साधुरपि चारित्रे मूर्च्छितो गृद्धश्चोपयुक्तो न विषयभिक्षादात्रीषु मूर्च्छां करोति। किं तर्हि चारित्रोपष्टम्भिकायां भिक्षायामेवोपयोगं ददातीत्येवं उपयुक्त आधाकर्मिकत्वा ऽनैषणादोषांश्च श्रमणः श्रवणचक्षुःप्रभृतिकरणोपयोगवान् दात्र्याः साधवे भिक्षादानाय गमनागमनादि कुर्वन्त्याः सत्कारश्रवणादिप्रकारेण जानातीत्येवं संशोध्य भिक्षां प्राप्नोति

केवली वि भुंजइ अपमाणं सुयं भवे इयरा' ॥१॥ तथा आहारग्रहणं प्रति गार्ध्याभावादशठोऽमायावान् भावोऽध्यवसायविशेषो यस्य स अशठभावो मायारहितभावोपेतो, मायी ह्याहारादिगार्ध्यपरिणामसद्भावाद् बहिर्वृत्त्यैव गवेषयति न प्रयत्नेन अतोऽसावशुद्धमाददानः कर्मणा वर्धते। तदिह परिणामशुद्धिरेव प्रकर्मबन्धाभावे कर्मक्षये वा कारणं नापरं किञ्चिदिति गाथार्थः ॥२४॥

इदानीं लिङ्गिक्षपकज्ञातेन तस्याग्रहणेऽपि च परिणामविशेष एव शुद्ध्यशुद्धिकारणमित्यावेदयन् शुद्धिद्वारं नवमं व्याख्यातुमाह।

**आहाकम्मपरिणओ बज्झइ लिंगेव्व सुद्धभोई वि। सुद्धं गवेसमाणो सुज्झइ खवगव्व कम्मे वि ॥२५॥**

व्याख्या–आधाकर्मैतदित्येतस्मिन्नध्यवसाये परिणतः स्थितः साधुराधाकर्मपरिणतः, तत् किमित्याह–बध्यते आधाकर्मपरिभोगितया कर्मणाऽऽश्लिष्यते, क इवेत्याह–लिङ्गीव सङ्घभोज्यपरिकल्पिताशुद्धाहारभोजकसाधुरिवेति दृष्टान्तः शुद्धभोज्यप्युद्गमादिदोषरहिताहाराभ्यवहारकोऽप्युपलक्षणत्वात् प्रासुकभोजिग्रहे न केवलमेतद्, विपरीतभोजीत्यपेरर्थः। इह च प्रासुकैषणीययोर्द्वयोर्भोज्यत्वेऽपि क्वापि ग्लानादिप्रयोजने एषणीयाभावेऽनेषणीयमपि युज्यते न तु प्रासुकाभावेऽप्रासुकमपि। किं तर्हि, श्राविकादिना तदभावे स्वयं प्रासुकीकृतमेव भोक्तव्यमित्येवमागमव्यवस्था विज्ञेया। ततो युगपद् द्वयोरुपादानं दृश्यते। लिङ्गिदृष्टान्तोऽयं–

'यथा एगंमि नयरे एगो महाविभूतिकलिओ सावगो सेट्ठी होत्था, तेण य रहजत्तपइट्ठाइकम्मिइपओयणे संघभोज्जं दवावियं। इओय पच्चासन्नगामवत्तिणा एगेण साहुणा सुयं, जहा तंमि नयरे अमुगो सावगो सेट्ठी संघभत्तं देइ। तओ सो तग्गहणत्थं सिग्घमागओ। तं सव्वमन्नेसिं दिन्नं। तेण सेट्ठी मग्गिओ। सेट्ठिणा भज्जा भणिया, तीए कहियं जहा सव्वं दिन्नं, सेट्ठिणा भणियं मम रसोईए [illegible] दोससत्तं पडिपन्नं मोयणं दिन्नं। तेण य संघयत्तं ते काउं भुत्तं। सो

खीरीए गरुयं भायणं भरेऊण आणियं। साहुणा य एसणोवउत्तेण सुद्ध
भणमाणीए खवगस्स जावणानिमित्तं घयगुलसंजुत्ताए खीरीए गरुयं भायणं भरेऊण आणियं। साहुणा य एसणोवउत्तेण सुद्ध- ... विहिय-
भणमाणीए खवगस्स जावणानिमित्तं घयगुलसंजुत्ताए भोयणट्ठो रुक्खस्स कस्स वि हेट्ठा गओ तत्थ य आलोइय पडिक्कन्तो विहिय-
त्ति कट्टु गहिया पज्जत्तं ति काउं नियत्तो गोयराओ। जहा एरिसं दव्वं उकिट्ठं च सुद्धं मए लद्धं तो जइ कोइ साहू अद्धाणाइ पडिवन्नो
तक्कालकरणिज्जसज्झायाइजोगो चिंतिउं पयत्तयत्तो जहा एरिसं दव्वं उकिट्ठं च सुद्धं मए लद्धं तो जइ कोइ साहू अद्धाणाइ पडिवन्नो
होइ तो संविभागिय भुंजेमि, तेणाहं संसारसमुद्दाओ उत्तरेमि त्ति तस्स धम्मचिंता जाया न उण खीरस्सोवरि मुच्छा, जहा एयाए
मम सरीरं लट्ठं मट्ठं वलिट्ठं भविस्सइ तओ पंचनमोकारपुव्वयं विहीए भुंजउ पयत्तो ताहे सुहज्झवसायस्स भुत्ते भोयणे केवलनाणं
जायं। कालेण मोक्खगमणं ति।
इति परमार्थतोऽध्यवसायोऽत्र कारणं तेन गूढाचारादीनां सत्कमाधाकर्म्मापि शोधितं भुंजानः साधुरबन्धक एवेति गाथार्थः ॥
इदानीं द्वारगाथोपात्तचशब्दसूचितमाधाकर्म्मग्रहणं प्रतीत्याक्षेपपरिहारद्वारं व्याचिख्यासुराक्षेपं तावदाह—

**नणु मुणिणा जं न कयं, न कारेयं नाणुमोइयं तं से। गेहिणा कडमाययओ, तेगरणसुद्धस्स को दोसो ॥**

व्याख्या—नन्वित्यक्षमायां मुनिना यतिना यदशनादि न कृतं न राद्धं स्वयं न नैव कारितं रंधितमन्येन न नैवानुमोदितं परेण
क्रियमाणं कृतं वा श्लाघितं ततश्च तदशनादि से तस्य साधोर्गृहिणा गृहस्थेन कृतं साध्वाद्यर्थमविहितमाददानस्य गृह्णतः त्रीणि कर-
णानि मनोवाक्कायलक्षणयोगत्रयरूपाणि शुद्धानि करणकारणानुमतिप्रवृत्त्यभावेन पाकादिक्रियाजनितकर्म्मबन्धलक्षणरहितत्वान्निर्म-
लानि यस्य स तथा। यद्वा त्रिभिः करणैर्मनःप्रभृतिभिः शुद्धो निर्दोषस्तस्येति। अत्र पाकादिक्रियायां यतिसत्कमनःप्रभृतीनाम-
व्यापृतत्वात्तज्जनितकर्म्मबन्धाभावेनास्य शुद्धता ज्ञेया। कः कीदृशो दोषः पाकादिक्रियाजनितकर्म्मबन्धरूपो न कश्चिदित्यर्थः। अ-

र्थमन्यसाध्वर्थं च पुनः पुनस्तत्करोति तथैकां वारां तद्ग्रहणप्रवृत्तस्सन् भिन्नदंष्ट्रत्वादिना सोऽपि तदाचरितं प्रमाणीकुर्वन्तोऽपरेऽपि
साधवः पुनः पुनस्तद्गृह्णन्ति ततश्च निर्द्धंधसो निर्द्धर्म्मा चकाराद् भिन्नदंष्ट्राश्च ते दृश्याः। तत्र भिन्नाः तद्रसेन व्याप्ता दंष्ट्रा दन्त-
विशेषा यस्य स तथा लब्धतदास्वाद इति हृदयं। गृद्धः शोभनतयाधाकर्म्माभिलापातिरेकवान् न मुञ्चति न त्यजति सजीवमपि सचे-
तनमपि बीजपूरादि न केवलमचेतनमित्यपेरर्थः स आधाकर्मिकग्राही यतिः, पश्चादात्मनस्तत् प्रसङ्गवृद्ध्यनन्तरमिति। यदा च तन्न
गृह्णाति तदा स एव कारणग्रहणप्रसङ्गं निवारयति परं पूर्वोक्तैव व्यत्ययेन तत्प्रसङ्गनिषेधभावना कार्या निःशूकता चैव परिहृता
भवतीति सामर्थ्यादुक्तं भवतीति गाथार्थः ॥२७॥

व्याख्याता 'तं पुण जं जस्स जहे'त्यादिद्वारगाथा, तद्व्याख्यानाच्च व्याख्यातं समपञ्चमाहाकम्मुद्देसिएत्यादिगाथोपात्तमाधाक-
र्मिकद्वारम्, इदानीं तद्गाथोल्लिखितमेवौद्देशिकद्वारं व्याचिख्यासुस्तद्भेदनिरूपणं तन्मध्यादेकस्य स्वरूपं चाह।

**उद्देसियमोह विभागओ य, ओहे सए जमारंभे। भिक्खाउ कइ वि कप्पइ, जो एही तस्स दाणट्ठा ॥२८॥**

व्याख्या—औद्देशिकमुक्तशब्दार्थं द्विधा भवति इति शेषः। कथमित्याह—ओघविभागतस्तत्रौघ उद्देशादिभेदानामविवक्षया सा-
मान्यं। तथा विभजनं विभागः, तेषामेव विवक्षया विशेषस्तत ओघश्च विभागश्चेति विग्रहे तौ तथा, ताभ्यां। ततः चः समुच्चये
ओघौद्देशिकं विभागौद्देशिकं चेत्यर्थः। तत्रौघे ओघौद्देशिकं तत् स्यादिति शेषः। अयं किमित्याह—'सए जमारंभे'त्यादि स्वके आत्म-
विषये आत्मार्थमिति यावत् आरम्भे व्यापारे कृते सति यदशनादि निष्पन्नं तन्मध्यात् भिक्षा भक्तादिविभागात् कत्यपि कियतीरपि,
अपिः परिपूर्णभोजनदानस्य सम्पूर्णभिक्षाणां च दानशक्त्यभावं सूचयति, कल्पयति सम्प्रधारयति कश्चिद् गृहीति गम्यते। किम-

पृथक्कुरु इति वचनाकर्णनाद्वा इत्येवं कायिकवाचिकचेष्टाविशेषैरौद्देशिकं जानाति ज्ञात्वा चैषणायामुपयुक्तो निःसन्देहोऽनापृच्छ्य सन्देशिकमेतदिति परिहरति। इदं तु सङ्कल्पितदत्तिपृथक्कृतासु दत्तासु वा, शेषं कल्पते शुद्धत्वात्। पात्रकं तु तत्परित्यागेऽकृतत्रिकल्पमपि शेषग्रहणाय शुद्ध्यतीति गाथार्थः ॥२८॥

उक्तमोघौद्देशिकं, विभागौद्देशिकं विभणिषुस्तावत्तस्य भेदानाह।

**बारस वेहं वेभागे चउद्धु द्देठं १ कडं च २ कम्मं च ३। उद्देससमुद्देसा-देससमाएसा ४ भेएण ॥२९॥**

व्याख्या—द्वादशविधं-द्वादशभेदं 'विभागे'त्ति विभागौद्देशिकं भवतीति शेषः। यथा चतुर्द्धा चतुष्प्रकारं ज्ञेयं। किं तदित्याह-'उद्दिट्ठं'ति तत्रोद्देशनमुद्दिष्टं, स्वार्थं निष्पन्नस्याशनादेर्द्रव्यभेदादिना भिक्षाचराणां दानाय कल्पनं मत्वर्थीयेऽति उद्दिष्टं भक्ताद्युच्यते। 'कडं चे' ति कूरादिकं सत् करंबकादिलक्षणपर्यायान्तरेण क्रिया तस्येति कृतं चः चतुर्द्धेत्यस्यात्राप्यनुकर्षणार्थः। 'कम्मं चे'ति स्वार्थनिष्पन्नं लड्डूकचूर्णादिकं सद्गुडपाकादिना क्रिया लड्डूकादिना क्रियते स्मेति कर्म्म चः पूर्ववत्। इह त्वौद्देशिकस्य साध्यत्वादुद्दिष्टौद्देशिकं, कृतौद्देशिकं, कर्म्मौद्देशिकं चेति ज्ञेयम्। कथं पुनरुद्दिष्टादीनां चतुर्द्धात्वमित्याह—'उद्देसे'त्यादि उद्देशं च समुद्देशं च आदेशं च समादेशं च तानि तथा। एतल्लक्षणो वक्ष्यमाणो भेदो विभागो भेदप्रभेदादिकथनमिति यावद् उद्देशादिभेदास्तानिति। इह विभागौद्देशिकमुद्दिष्टकृतकर्म्मस्वरूपमूलभेदात् त्रिविधं। पुनः प्रत्येकमुद्देशसमुद्देशादेशसमादेशलक्षणोत्तरभेदाच्चतुर्विधमित्येवं विभागौद्देशिके सर्व्वे द्वादशभेदा इति गाथार्थः ॥२९॥

उद्देशादिभेदचतुष्कस्य स्वरूपनिरूपणायाह—

तैर्मिश्रितं करम्बितं यत्सङ्खडीमुक्तोद्धरितं कूरादि तद्व्यञ्जनमिश्रं करम्बीकृतमित्यर्थः। तदादिर्यस्य, निर्मञ्जनादिना पिण्डीकृत-
लड्डूकचूर्ण्यादेः पर्यायान्तरस्य, तद्व्यञ्जनमिश्रादिकमित्यर्थः। करंबकादिलक्षणपर्यायान्तरापन्नं कृत्वा इत्यर्थः। यदोदनादि संख-
डीमुक्तोद्धरितं चतुर्णामन्यतरस्मै दानायोद्दिशति गृही यथेदममुकेभ्यो दातव्यमिति। 'कडं'ति उद्देशिकस्य प्रस्तुतत्वात् कृतं करं-
बकादिपर्यायान्तरेण विहितमुद्देशिकं कृतोद्देशिकं तदोदनादि भण्यते। इह व्यञ्जनकूरोऽन्यो वा कश्चिद्यथासम्भवं यावदर्थिका-
दीनामन्यतरस्मै दानाय कल्पितो ज्ञेय इत्युद्देशिकता। तथा 'तमग्गितवियाइ पुण कम्मं' ति तत्सङ्खडीमुक्तोद्धरितं लड्डूकचूर्णिमु-
द्रादिकं अग्निना-वह्निना तापितमुष्णीकृतमग्नितापितं गुडादीति गम्यते। तदादिर्यस्य तदग्नितापितादि आदिग्रहणात् सचित्तज-
लहिंगुलवणराजिकासन्मिश्रदध्यादिग्रहो विभक्तिलोपात्तेनाग्नितापितादिना गुडादिद्रव्येण किमित्याह-'पुण'त्ति पुनः प्रथमस्वाभावि-
ककरणापेक्षया भूयोऽपि लड्डूकादिपर्यायान्तरापादितं कृत्वा यदा चतुर्णामन्यतरस्मै दानायोद्दिशति तदा तन्मोदकचूर्ण्यादिकं तथा-
विहितं 'कम्मं' ति कर्मोद्देशिकं भण्यते। यद्वेत्थं व्याख्यायते-अग्नितापितादिगुडादिद्रव्ययोगाद्भूयो मोदकादिपर्यायान्तरापादितं
तत्संखडीमुक्तोद्धरितं मोदकचूर्ण्याद्यग्नितापिताद्युच्यते। तत् पुनः पुनः शब्दो व्यतिरेकार्थः तथाभूतं चतुर्णां दानायोद्दिष्टं, 'कम्मं'
ति कर्मोद्देशिकं भण्यते। तथाहि-'अचित्तमेव पच्चइ आहाकम्मं तयं भणियमि'त्येतल्लक्षणेनाधाकर्मणा, देशतो युक्तं कर्म गुडपाकादि
मोदकचूर्ण्यादिकं वा किञ्चिद्यथासम्भवं यावदर्थिकादीनां चतुर्णामन्यतरस्मै दानाय कल्पितमित्यौद्देशिकमिति। कथं पुनरनयोः
कृतकर्मोद्देशिकयोः सम्भवः? उच्यते यथा कश्चिद् गृहस्थः सङ्खड्यां निवृत्तायां दध्यादिसरकस्थाल्यादिभाजनस्य ग्रहणाय, मा वा
केवलः कूरो विगन्धितां ग्रहीष्यति, द्वयोरपि वा दध्यादिकूरयोरेकेनैव गमनागमनादिना दानाय निष्पत्स्यमानत्वान्निष्कष्टमेव दानं

यदि गृही भार्यादिः सम्मुखं वक्ति तदा तत्करंबकादि कल्पते, दान-
यत् प्रहरद्वयान्तं कालं यावद्दातुमिष्यं तदर्वागपि मा दास्यसीति यदि गृही भार्यादिः सम्मुखं वक्ति तदा तत्करंवकादि कल्पते, दान-
परिणामापगमे स्वगृह एवैतदुपकरिष्यतीति दात्र्याऽऽत्मार्थित्वात्। कर्म्मौद्देशिकान्त्यभेदत्रयं दानपरिणामापगमादात्मार्थीकृतमप्यकल्प्यं
साधूनामविशुद्धिकोटिकत्वात्। तथा भिक्षार्थं प्रविष्टं साधुं दृष्ट्वा यदा गृहस्थी भणति यथा अग्रेतनेषु विहृत्य व्यावर्त्तमानेन त्वया
मद्गेहे आगन्तव्यं येन भवदर्थं वक्कुलादे(वल्लकादे)रस्य संधूय(प)नं कृत्वेदं तुभ्यं प्रयच्छामीति, तदा यदि तद्यथाभणितं दात्र्या,
तथाकृत्वा ददाति तदा तदकल्पं कर्मौद्देशिकत्वात्। यदि च तथाकृत्वा दातुमभिलषितं दात्र्या, तथैवाकृतमेव ददाति तदा कल्पं
साम्वयं क्रियाविशेषस्याकरणात् सङ्कल्पमात्रस्य च क्रियाशुन्यस्यादुष्टत्वात्, यदुक्तं–'न खलु परिणाममेत्तं पयाणकाले असक्रिया-
रहियम्। गिहिणयं(यंत) तु जयं दूसइ आणाए पडिवद्धम्' ॥१॥ इत्यलं प्रसङ्गेनेति गाथार्थः ॥२१॥

उक्तमौद्देशिकद्वारं, साम्प्रतं पूतिकर्म्मद्वारं व्याचिख्यासुस्तस्याः स्वरूपं भेदप्ररूपणं च वक्तुमाह—

**उग्गमकोडिकणेण वि असुइलवेणं व जुत्तमसणाई। सुद्धं पि होइ पूई, तं सुहुमं बायरं ति दुहा ॥२२॥**

व्याख्या—उद्गमः–उत्पत्तिः। 'कुट् कौटिल्ये' इत्यस्यानेकार्थत्वात् कुट्यते छिद्यते इति कोटिराहारादिविषयविवक्षितदोषवृन्दस्य
विवक्षितोंऽशः। सा च वक्ष्यमाणविशुद्धिकोट्यविशोधिकोटिभेदाद् द्विधा। तदत्राविशुद्धिकोटिर्ग्राह्येत्युद्गमविषया कोटिरविशुद्धिको-
टिलक्षणा वक्ष्यमाणोद्गमकोटिस्तस्या उद्गमकोटेरुपचारादुद्गमकोटिदोषयुक्ताहारस्य कणेनापि सूक्ष्मलेशेनापि आस्तां प्राचुर्येणेत्यपे-
[illegible]। 'असुइलवेणं व' त्ति वा शब्दस्येवार्थत्वादशुचिलवेनेव विष्टालेशेन यथा। अशुचिश्च कुथितद्रव्यस्यान्यस्याप्युपलक्षणं द्रष्टव्या।
[illegible]कं मिश्रितं मिलितं, अशनादि अशनपानाद्याहारचतुष्टयविषयं द्रव्यम्। तत्किमित्याह–पूर्वावस्थायां शुद्धमप्युद्गमादिदोषरहितमपि

आगच्छइ तेण भणियं न याणामि। तओ तेहिं लिंपणमज्झे मंडगमच्छगखंडाणि दिट्ठाणि। सुरागंधो य अग्घाइओ य नायं, जहा लिंपणमज्झे असुइ चिट्ठइ। तओ तं सव्वं भोयणं असुइ त्ति काउं छड्डावियं, तं लिंपणं उक्खणावियं। अन्नेण छगणेण सभा सारविया अन्नरसोईए भुत्तं ति।

स्वरूपमभिधायाधुना एतदेव भेदत आह—'तं' ति तत्पूति, पूतिशब्दः संस्कृतेऽपि स्त्रीलिङ्गो नपुंसकलिङ्गश्च दृश्यते क्वचित्। सूक्ष्मं स्वल्पदोषवत्त्वेन श्लक्ष्णं, बादरमारंभतया बहुदोषवत्त्वेन स्थूलं, चः समुच्चयार्थो लुप्तो दृश्यः, इति स्वरूपप्रदर्शने, इत्येवं द्विधा द्विविधः स्यादिति शेष इति गाथार्थः॥

अधुना यथोद्देशं निर्देश इति न्यायमाश्रित्य सूक्ष्मस्वरूपं द्वितीयभेदप्ररूपणं चाह—

**सुहुमं कम्मियगंधग्गि, धूमवप्फेहिं तं पुण न दुट्ठं। दुविहं बायरमुवगरणभत्तपाणे तहिं पढमं॥३३॥**

व्याख्या। सूक्ष्मं बादरविलक्षणं पूति भवति। कैरित्याह, कार्म्मिकगन्धाग्निधूमबाष्पैस्तत्र 'कम्मिय'त्ति आधाकर्मिका इह चात्रोप- रत्र च कार्म्मिकग्रहणेन सर्व्वेषामविशुद्धिकोटिदोषाणां ग्राहो द्रष्टव्यः। गन्ध आधाकर्म्मान्नस्य घ्राणिरग्निराधाकर्म्मणो राध्यमानस्य सत्क- इंगाररूपो वैश्वानरो नवरमत्र तदवयवास्तापादिरूपा अंशा ग्राह्या, व्याख्यानात् धूमोऽपि तस्यैव राध्यमानस्याग्निकाष्टाद्युत्पन्नः प्रतीतो, बाष्पस्त्वाधाकर्म्मान्नस्यैवोष्मा, ततो गन्धश्चाग्निश्च धूमश्च बाष्पश्चेति द्वन्द्वे, कार्मिकाश्च ते गन्धाग्निधूमबाष्पाश्च कार्मिकगन्धाग्निधू- मबाष्पास्तैः। यद्वा 'कम्मिय'त्ति आधाकर्म्मिकसम्बन्धिनो गन्धाग्निधूमबाष्पा इति समसनीयं। अयमर्थः आधाकर्म्मिकभक्तादिगन्ध- बाष्पाग्निधूमैः सह मिलितं शुद्धमप्यशनादिकं सूक्ष्मं पूतिकर्म्म भवतीति। यद्येवं तदापूति किञ्चिन्नास्त्येतैः सर्व्वस्यापि व्यापनादि-

गृहार्थं पूर्व्वं कर्प्पटिकाद्यागमनापेक्षयाऽग्रतो विहिते सतीति विशेषः। कस्मिन्नित्याह। मूलं प्रथमोऽग्निज्वालनाद्ग्रहणदानादिरूपारम्भा-
दिकर्त्तव्यव्यापारो मूलारम्भस्तस्मिन् । एतेन च मिश्रजातादध्यवपूरकस्य नानात्वं दर्शितं । मिश्रे ह्यादितेऽग्निज्वालनादिप्रस्ताव
एव स्वगृहयावदर्थिकाद्यर्थमुपस्कर्त्तुमारभते, अध्यवपूरके च गृहिणा स्वार्थमग्निनाद्याद्ग्रहणदानमतो आरम्भे कृते सति पश्चात्स्वार्थक-
लिपततन्दुलानां मध्ये कार्प्पटिकाद्यर्थं तन्दुलादीनां माणकादिकं सङ्कल्पितं प्रक्षिप्य राध्यते इत्युभयोर्भेदः। यत्तदोर्नित्ययोगाद्यदि
व्याख्यातं तत्तस्मात्कारणाद् दोषोऽनन्तरोक्तः । स्वार्थदत्ताद्ग्रहणे प्रथमं कृते प्रभूतभिक्षाचरसंदर्शनतस्तदर्थमपि पश्चादधिकतरं तंदुला-
दिप्रक्षेपकरणलक्षणोऽध्यवपूरक उक्तशब्दार्थस्त्रिविधो यावदर्थिकादिविघटितभेदात्रिप्रकारः स्याद्यथा स्वगृहमिश्रशब्दयोः प्रस्तावा-
द्गम्यमानत्वात् स्वगृहयावदर्थिकमिश्रो निजवेश्मकार्प्पटिकादिसाहिक इत्यर्थः । तथा स्वगृहसाधुमिश्रो निजगृहसाधुसाधारण इत्यर्थः ।
स्वगृहपाखण्डिमिश्रो निजवेश्मशाक्यादिसाहिक इति । इह स्वगृहश्रमणमिश्राध्यवपूरकोऽपि घटते परं श्रमणाः पाखण्डिनां मध्ये
विवक्षिता इत्येवं त्रैविध्यं ज्ञेयं । इह यावदर्थिकाद्यर्थमधिकतरतंदुलादिप्रक्षेपदोषेण सर्व्वोऽप्याहारोऽशुद्धः स्यात् तथा स्वगृहयावदर्थि-
कमिश्राध्यवपूरके यावंतः कणाः कार्प्पटिकाद्यर्थं पश्चात् क्षिप्तास्तत्प्रमाणे राद्धेर्यावत् स्याद्देतावत् प्रमाणं भक्तं यदि गृहस्थेन स्थाल्या
उद्देशेन स्थगनिकादौ क्षिप्त्वा पृथक् कृतं स्यादुद्देशेन स्वगृहादौ वितीर्णं वा नतु सिक्थादिगणनेन पलिमन्थादिदोषात्तदा शेषं स्थाली-
भक्तं ग्रहीतुं कल्पते विशोधिकोटिकत्वादेवं मिश्रजाताद्यभेदेऽपि ज्ञेयं किञ्चित्तुल्यत्वादनयोरिति । अन्त्यभेदद्वयं चाविशोधिकोटिक-
कतया वक्ष्यतीति तद्भक्तमकल्प्यमिति गाथार्थः ॥५२॥

उक्तमध्यवपूरकद्वारं तत्प्रतिपादनाच्च षोडशाप्युद्गमदोषाः प्रोक्ता अथैतेष्वेव कल्पाकल्पव्यवस्थार्थं विषयविभागमाह ।

तीए जुयं पत्तं पिहु, करीसनिच्छोडियं कयतिकप्पं। कप्पइ जं तदवयवो सहस्सघाईं विसलवो व्व ॥५४॥

व्याख्या—इहाविशोधिकोटिद्रव्यं लेपकृदलेपकृच्चेति द्विधा पात्रके निपतितं स्यात्। तत्र तक्रतीमनजगार्यादिकं खरण्टकत्वाल्ले-
पकृत्। वल्लचणकादिकं तद्विपरीतत्वादलेपकृत्। ततश्च 'तीए जुयं'ति तया प्रदर्शितरूपयाऽविशोधिकोट्या उपचारादविशोधिकोटि-
दोषयुक्तलेपालेपकृदाहारेणेत्यर्थः, युतं खरण्टितं स्पृष्टं वा, किञ्चि(किं त)दित्याह पात्रमपि साधुभाजनमपि। अपिः पात्रकस्याकल्पनीय-
ताभणनेनातिशयद्योतकः। हुर्वाक्यालङ्कारे, शेषशुद्धाशनादेर्ग्रहणाय न कल्पते इति शेषः। यद्येवं तर्हि कीदृशं सत्पात्रकं कल्प्यं स्या-
दित्याह—'करीसनिच्छोडियं' ति करीषेण शुष्कगोमयचूर्णेनोपलक्षणत्वाद्भस्मादिना च निश्छोटितं घृष्टमुद्वर्तितमित्यर्थः। करीषनि-
श्छोटितं सत् उपलक्षणत्वाल्लेपकृदशुद्धाहारावयवापनोदाय करीषघर्षणात्पूर्वमङ्गुल्यादिप्रोञ्छितं चेत्यपि दृश्यं। पुनरपि किं विशिष्टं
सदित्याह, 'कयतिकप्पं'ति कृता दत्ता त्रयस्त्रिसङ्ख्याः कल्पा जलप्रक्षालनरूपा यत्र तत्कृतत्रिकल्पं। इत्थं कृतं सत्, किमित्याह
कल्पते साधूनां परिभोक्तुं युज्यते। इतरथा पूत्य(ति)दोषत्वादकल्प्यमिति भावः। तथा कृतत्रिकल्पमप्यातपादिना शुष्कं कल्प्यं स्या-
न्नान्यथा। चतुर्थकल्पे दत्ते जलार्द्रमपि पात्रकं शेषग्रहणाय कल्पत इत्याद्युपलक्षणत्वाद् दृश्यं। तदुक्तं वृद्धैः 'निच्छोडिए करीसेण वा-
वि उव्वट्टिए तए कप्पा। सुक्खाविच्चा गिण्हइ अन्ने चउत्थे असुक्खे वि'॥१॥ तदेतेन एतस्या अतिपरिहार्यतां दर्शितवान्। तथाह्यवि-
शोधिकोट्याहारे ग्रहीत्वोज्झितेऽपि तया छुप्तमकृतत्रिकल्पं तं पात्रकमपि तावन्न कल्पते। किं पुनः साक्षादविशोधिकोट्याहारोपभोगः
कर्त्तुमिति सामर्थ्यादुक्तं भवति। अथ किमित्येवं महता यत्नेन एतस्या निषेधोऽपदिश्यते इत्याह यत्नाद्यपर्गम्यमानत्वात्तस्याऽवि-
शोधिकोटिदुष्टाशनादेः सम्बन्धी अवयवोऽपि सिक्थाद्यपि आस्तां कवलादिरित्यपेरर्थः। किमित्याह सहस्राणि हन्तुं शीलमस्येति सह-

शोधिकोट्या गृहीतेभ्य उद्धरिता उद्गमदोषास्ते विशोधिकोटिशब्दवाच्याः स्युः, यथौघौद्देशिकं, विभागौद्देशिकस्याद्यं भेदनवकं मालोपहृतमाद्युपकरणपूतिर्मिश्रस्याद्यो भेदः, स्थापना, सूक्ष्मप्राभृतिका, प्रादुष्करणं क्रीतमापमित्यकं, परिवर्तितमभ्याहृतमुद्भिन्नं मालोपहृतमाच्छेद्यमनिसृष्टमध्यवपूरकस्याद्यो भेदश्चेति। उपलक्षणत्वाद्वक्ष्यमाणोत्पादनैषणदोषाश्चेति व्याख्येयं। तत्र शुद्धस्य मध्ये विशोधिकोटिदोषवतो भक्तादेः पतितस्योद्धृत्य त्यागः कार्यो अकल्प्यत्वात् स च यद्विषयो भवतीत्येतदाह। 'तदवयवमि'त्यादि इह द्रव्यक्षेत्रकालभावानाश्रित्य तत्त्यागो भवति तत्र तदवयवं यत्पतितं पश्यतीति योगः। इह चातिशयोक्त्या एतस्याः परिहारख्यापनार्थमवयवशब्द उपात्तस्ततोऽत्रावयवशब्देन द्रव्यं ग्राह्यं ततो यत्किमपि तदवयवं विशोधिकोटिदोषात् कूरादिद्रव्यं पतितं दात्र्या क्षिप्तं पश्यत्यवलोकते 'तं चिय उद्धरे' इति वक्ष्यमाणेन योगस्तत्र चिय शब्दस्यैवकारार्थत्वात्तदेवाऽशुद्धद्रव्यमुद्धरेत् पृथक् कुर्यात् परिष्ठापयेदिति यावत्। अनेन द्रव्यविषयस्त्याग उक्तः। तथा यच्छब्दस्यावृत्त्या योजनात् यत्कूरादिद्रव्यं, 'जहिं'ति, यत्र पात्रकैकदेशे शुद्धभक्तमध्ये वा पतितं तत्तवस्तस्मात् पात्रकाच्छुद्धभक्तमध्याद्वा उद्धरेदिति क्षेत्रविषयः स उक्तः। तथा यद्यदा यस्मिन् क्षणे पतितं प्रक्षिप्तं दात्र्या तत्तदैव शीघ्रमुद्धरेत्। बृहद्वेलया हि शुद्धं भक्तमितरेण व्याप्यते। ततस्तदप्यशुद्धप्रायं स्यादिति कालविषयः स उक्तः। तथाऽशठस्तस्मिन् मनोज्ञेऽरक्तोऽमनोज्ञेऽत्वद्विष्टश्च मास्य विकल्पः स्यात् यदोदनादिकं द्रव्यं पश्यति विशोधिकोटिदोषवदिदमिति प्रत्यभिजानाति। ज्ञात्वा च 'सम्मं' ति सम्यक् निर्वाहविषयविज्ञानविषयनिजशक्त्यनुरूपयतमानतानैपुण्येन शुद्धभक्तादिघृतपतद्ग्रहात्तदुद्धरेदित्यनेन च भावविषयस्स उक्तः। तथाऽप्रोज्झिते शुद्धाहारे सति के(पात्रके) तस्मिन्नशुद्धावयवेषु सत्स्वप्यऽकृतकल्पेऽपि शेषं गृह्णन् दोषभागस्य शुद्धकोटिकत्वात् निजभक्तैस्तौलितत्वात्तदवयवपरिभोगाय तं(तत्) प्रायश्चित्तमपि न

तं चेव असंथरणे, संथरणे सव्वम वि विगिंचंति । दुल्लहदव्वे असढा, तत्तियमेत्तं चिय चयंते ॥५६॥

व्याख्या—'तं चेव' त्ति। चः पुनरर्थः भिन्नक्रमश्च तदेव विशोधिकोटिदोषदुष्टमेव, असंस्तरणे तद्विनाऽनिर्व्वाहे विगिंचन्तीति योगः। संस्तरणे पुनस्तद्विनापि निर्व्वाहे सत्यपेरेवकारार्थत्वात् सर्वमपि समस्तमेव सव्वं विशोधिकोटिदोषवच्च वल्लादिकं विगिंचन्ति परित्यजन्ति परिष्ठापयन्तीति यावत्। अयमत्र भावार्थः। साधुना हि भिक्षामटता पूर्व्वं पात्रके शुद्धं भक्तादि गृहीतं ततस्तत्राप्यनाभोगादिनाऽज्ञातं विशोधिकोटिदोषदुष्टं गृहीतं। पश्चाद्ज्ञातं ततो यदि तेन विनापि निर्व्वहति तदा तत्सर्वमपि विधिना त्याज्यं। अथ न निर्व्वहति तदा प्रत्यभिज्ञाय निजविज्ञानेन तदेव दोषदुष्टं त्याज्यं न शेषम्। यदि च श्लथद्रवरूपस्य विशोधिकोटिदोषवतस्तक्रतीमनादेः शुद्धतज्जातीयमिलितस्य व्यवत्या परस्परं मिलितत्वेन शुद्धाशुद्धविभागो न लक्ष्यते, तदापि समस्तत्यागः कार्यः। चतुर्थभङ्गकाश्रितं विधिविशेषमाह। 'दुल्लहेत्यादि' दुर्लभमन्यत्र दुष्प्रापद्रवं श्लथरूपं घृतादिकं द्रव्यं तस्मिंस्तु पुनः शुद्धे यद्यपरं विशोधिकोटिदोषवत्पतितमथ ग्लानाद्यर्थं अवश्यं दुर्लभत्वाद्य(घद)र्थे तत्तदा तावन्मात्रमेव यावन्मात्रं विशोधिकोटिदोषवद् घृतादिकं पतितं तत्प्रमाणमेव कलय्य सर्व्वस्यापि मिलितस्य मध्यात्त्यजन्ति उद्धरन्ति साधवः। कीदृशाः सन्तः? इत्याह। अशठा निजशक्त्यनवगूहनेन यतमानतयाऽमायाविनस्ततः शेषः किञ्चिच्छुद्धं किञ्चिद्विशोधिकोटिदोषवच्च भवति। परं तत् सर्व्वज्ञाज्ञाकरणात् कल्प्यं स्यात्। इह दुर्लभशब्दोपादानात् सुलभे द्रव्ये सति सर्व्वमपि त्यजन्तीति दृश्यम्। तथाऽशठः सन् यदेवाचरति तदेव तस्य चारित्रनैर्म्मल्यहेतुतया कर्म्मबन्धाभावाय स्यात्। शठस्तु तदप्याचरन् चारित्रमालिन्योत्पादनेन कर्म्मणा श्लिष्यते इत्यावेदयतीति गाथार्थः ॥५६॥

अथ तानेव प्रस्तावितोत्पादनादोषान् नामतः सङ्ख्यातश्च गाथाद्वयेनाह ।

**धाइ दूइ निमित्ते, आजीववणीमगे तिगिच्छाय । कोहे माणे माया लोभे अ हवंति दस एए ॥५८॥**

**पुव्विं पच्छा संथव विज्जा, मंते य चुन्नजोगे य । उप्पायणाए दोसा, सोलसमे मूलकम्मे य ॥५९॥**

व्याख्या—धात्री बालपालिका स्त्री । इह च धात्रीति निर्देशेऽपि दोषशब्दसामान्याधिकरण्यात् सूचनाच्च धात्रीत्वकरणमिति दृश्यं । एवं यथासम्भवमन्यत्रापि ।१। तथा दूती परस्परसन्दिष्टार्थकथिका स्त्री, दूतीत्वकरणमित्यर्थः ।२। 'निमित्ते' त्ति निमित्तकरणमतीताद्यर्थसूचनं ।३। तथा आजीवो जात्यादीनां गृहस्थात्मसमानां कथनादिना आजीवनं ।४। 'वणीमगे' त्ति वनीपकत्वकरणं । तत्र वनुते दायकाभिमतेषु श्रवणादिष्वात्मनो भक्तस्य दर्शनात् पिण्डं याचते उत्पादयतीत्यर्थः । वनयति वा पिण्डार्थमात्मानं दायिकाभिमतेषु श्रमणादिषु संभक्तं दर्शयतीति निरुक्तिवशाद्वनीपकः । यद्वा वनीं दायकाभिमतजनप्रशंसोपायतो लब्धार्थरूपां पाति पालयतीति वनीपः । स एव वनीपकः । तस्य भावस्तत्त्वं तस्य करणं विधानं तत् ।५। तथा चिकित्सनं चिकित्सा रोगप्रतीकारः चः समुच्चये ।६। तथा कोपः क्रोधः ।७। मानो गर्व्वः ।८। माया वञ्चना ।९। लोभो लुब्धता ।१०। चः पूर्ववत् भवन्ति जायन्ते दश प्रतीताः । एते अनन्तरोक्ता इति ॥५८॥

तथा पूर्व्वं दानात् सूचनाद्विद्याप्रयोग इति । तत्र विद्या स्त्रीस्वरूपदेवताधिष्ठिता ससाधना वा ओमित्याद्यक्षरपद्धतिस्तस्याः प्रयोगो व्यापारणं सः १२, एवं मन्त्र इति मन्त्रप्रयोगः किन्तु मन्त्रः पुरुषरूपदेवताऽधिष्ठितोऽसाधनो वा । चः समुच्चये ।१३। तथा चूर्णस्तिरोधानादिफलो नयनाञ्जनादियोग्यो द्रव्यक्षोदः ।१४। योगः आकाशगमनसौभाग्यादिफलो द्रव्यसमूहः । चः पूर्व्ववत् ।१५।

रुदन्तं वालकं दृष्ट्वा तज्जननीं प्रत्याह, यथा मह्यं शीघ्रं भिक्षां प्रयच्छ तेऽसौ वालको रोदिति पश्चादेनं स्तनं धापय । अहो ते अवि-प्रमादिता किं सुलभानि पुत्रभाण्डानि ? यद्वा पर्याप्तं मम भिक्षया तावदेनमेव तर्प्पय । भूयोऽपि वाऽहं भिक्षार्थमागमिष्यामि । तथा मतिमानऽरोगी दीर्घायुश्च स्तनं पायितो वालः स्यादिति क्षीरधात्रीत्वं कारयति । यद्वा वक्ति तिष्ठ त्वं निराकुलाऽहमेवास्मै क्रुतोऽप्या-नीय क्षीरं दास्यामीति वचनतः स्वयं धात्रीत्वं करोति । अत्र च प्रभूता दोषाः स्युर्यथाऽसौ वालकमाता भद्रकतयाऽऽवर्जितचित्ता सत्याधाकर्म्मादिपाकं कुर्यात्तथा वालकस्वजना अन्यो वा प्रातिवेश्यादिर्वालकमात्रादिना सह सम्बन्धं भावयेच्चाटुकरणदर्शनात् । यदि च प्रान्ताऽसौ तदा प्रद्वेषं विदध्यात्तथा वेदनीयकर्म्मविपाकवशाद् वालस्य मान्द्ये जाते त्वया मत्पुत्रो ग्लानीकृतइत्यादि सा-धुना सह कलकलादिभवनात् प्रवचनमालिन्यं स्यात् । चाटुकारिण एते इति जनेऽश्लाघा स्यादेवं शेषास्वपि धात्रीष्वमी द्रष्टव्याः । अधुनैकां प्रच्याव्यान्यस्याः स्थापनेन यथाऽसौ तत् करोति तथोच्यते । भिक्षाचर्यायां प्रविष्टेन साधुना महिलां सशोकां दृष्ट्वा कि-न्त्वमद्याधृतिपरा दृश्यसे ? इत्यादि पृच्छ्यते, तया चोच्यते । धार्मिक यते ! दुःखं दुःखसहायस्यैव कथ्यते, साधुः प्राह को दुःख-सहायो भण्यते, सा प्राह यः कथितो दुःखविषयं प्रतिकारं करोति । साधुनोक्तं मां मुक्त्वा कोऽन्यस्तथाभूतः, सा प्राह तर्ह्युद्दालितम-परधात्र्या मम धात्रीत्वमिति । ततः साधुरुत्पन्नाभिमानो यावन्न त्वं तत्रैव स्थापिता तावन्नाहं त्वदीयां भिक्षां प्रहीष्यामीत्यभिधाय च्यावयितुमिष्टाया धात्र्या अदृष्टत्वात् स्वरूपं जानाय तस्या एव पार्श्वे पृच्छति यथा सा किं तरुणी मध्यादिवयस्का वा, प्रतनुस्तनी स्थूलस्तनी वा, शरीरेण वा मांसला कृशा वा कृष्णा गौरा वेत्यादि । ततो ज्ञाते तत्स्वरूपे यदि च्यावयितुमिष्टा धात्री स्थविरा, कृशशरीरा, स्थूलस्तनी कूर्पराकारस्तनी वा स्याच्चतस्तत्स्वरूपधात्रीसमक्षं तदाश्रिते गृहे गतः संस्तद्गृहस्वामिनः शृण्वतो वाले

गृहं गतो यती रममाणं बालं दृष्ट्वा तज्जननीं प्रत्याह । तथा मह्यामसौ बालो लुठति धूल्या वा अवगुण्ठितशरीरस्तिष्ठत्यतः स्नापयनमिति । जलं ग्राहयित्वा बालमातुः पार्श्वात्तस्य मज्जनविधापनं कारयति । यद्वा अहमेनं मज्जयामीत्यभिधाय स्वयं जलं गृहीत्वा बालस्य मज्जनविधानं करोति । तथाऽत्राप्यनी(भिम)तधात्र्याः स्थापनाय सुतजनन्याः पुरतो जल्पति । यथा भवदभिमता धात्री सर्वथा न मज्जति । अतिबहुजलेन वा मज्जति तत्र सर्वथा अस्नापितो बालो दुर्बलदृष्टिरेव स्यादतिशयबह्वम्बुक्षेपणेन स्नप्यमानोऽसाववलनयनो रक्ताक्षो जलभीरुश्च स्यात् । स हि बालत्वेऽसहितजलप्लावनतया श्वासनिरोधाद्व्याकुलीभवतस्तस्य यज्जलभयं समुत्पद्यते, तेन गुरुरपि जातोनद्यादिषु प्रविष्टः पूर्वभयाऽभ्यासेन जलाद् बिभेदिति । भवदभिष्टा च धात्री प्रचुरजलेनैव स्नपयतीति न सम्यग् योगः। अथ मण्डनधात्रीत्वं करणादिभेदत उच्यते । गृहे गतो बालजननीं प्रत्याह । खेलाक्षुरिकादिरूपैस्तिलककटककुण्डलादिभिश्चाभरणैरेनं मण्डयेति कारणम् । यद्वा अहमेनं मण्डयामीति प्राहेति स्वयं करणं । च्यावयितुमिष्टायाः सत्यानि वा दूषणानि वदति । यथासौ भवत्स्थापितमण्डनधात्री बालस्य हस्ताभरणानि कटकादीनि कण्ठसत्कानि च नक्षत्रमालादीन्यपि पादयोः परिदधाति चरणसत्कानि च घुर्घुरादीनि कण्ठादाविति। इदं च श्रुत्वा बालजनकेन तामशोभनामिति विचिन्त्यापनीय च, पूर्वधात्र्येव क्रियते । क्रीडनधात्रीत्वं करणादिभेदतो यथा, भिक्षार्थं प्रविष्टः साधुर्बालं रुदन्तं दृष्ट्वा तज्जननीं प्रत्याह यथैनं बालं क्रीडनककार्युंछापनकवाक्यैर्मृन्मयहस्त्यादिभिर्वा क्रीडां कारय । अहं वा एनं रमयामीत्येवं मातुः सकाशात् स्वयं वा क्रीडनकधात्रीत्वं कारयति करोति वा । अभिप्रेतायाः स्थापनार्थं तन्मातुरग्रतश्च्यावयितुमिष्टधात्र्या दोषोद्घट्टनं च करोति यथा—कठिनध्वनयुतधात्र्या रमितो बालोऽपि कर्कशध्वनः स्यात् । मृदुस्वरया च रमितो बालो मृदुस्वरोऽव्यक्तस्वरो वा स्यात् इति स्वमत्या दोषान् घटयति । एतद्दोषान्यतरस्मिंश्च भवद्धात्री वर्त्तते ।

वा सन्देशकं नीत्वेति। ततः किमित्याह यं पिण्डमाहारादिलक्षणं लभते प्राप्नोति क इत्याह लिङ्गं रजे हरणादि साधुवेपरूपं चिह्नं तेन जीवति निर्वहतीत्येवंशीलस्स तथा इत्थं निर्व्वाहं प्रवर्त्तयन् लिङ्गमात्रोपजीवक एव भवतीति विशेपणं स इत्थम्भूतो दूतीत्वकरणोपायेन लब्धः पिण्डो मध्यपदलोपे दूतीपिण्ड इत्युच्यते। स च किंविशिष्ट इत्याह अनर्थाः प्रभूता ऐहिकामुष्मिका अपायाः फलं कार्यं यस्या-सौऽनर्थफलोऽनेकदोपव्रातहेतुरित्यर्थः। अयमत्र भावार्थः किल कश्चिद् व्रती भिक्षावस्त्राद्यर्थं व्रजन् विशेपस्तल्लाभार्थं तस्यापि ग्रामस्य सत्कं पाटकांतरे ग्रामान्तरे वा जनन्यादेः सत्कं पुत्र्यादेरग्रतस्तद्वचनं नीत्वा कथयति। यथा सा तव माता स तव पिता च त्वयाऽद्या-त्रागन्तव्यमित्यादि त्वत्संमुखं वक्तीत्येवं स्वपक्षपरपक्षयोः शृण्वतो निःशङ्कं कथनात् प्रकटः सन्देशः। तथा कश्चिद् व्रती दुहित्रा मात्रादिकं प्रति स्वग्रामे परग्रामे वा सन्देशकनयनायाभ्यर्थितस्ततस्तत्सन्देशकमवधार्य तज्जनन्यादिपार्श्वे गतः सन् द्वितीयसङ्घाटकी-यसाधोः दुहितुः सत्कमवलभकमसौ तन्मातुर्ददाति इत्यध्यवसायोत्पत्त्यर्थमित्थं तज्जननी संमुखं ब्रूते। यथा अतिमुग्धा सा तव दुहिता, यैवमस्मान्प्रतिवदति यथेदं प्रयोजनं मदीयागमनादिकं मम मात्रे त्वया निवेद्यमिति। सापि दक्षा तदभिप्रायं ज्ञात्वा तत्सङ्घाटकीय-साधुप्रत्यायनाय प्रतिभणति। यथा वारयिष्याम्यहं तां तवाभिमुखं पुनरेवं जल्पन्तीमित्येवं सङ्घाटकीयसाधोरसौ गोपयितुमिष्टो न लोकस्येति लोकोत्तरप्रच्छन्नसन्देशक इति। तथा कस्याश्चित् पिता व्रती समभवत् माता तु तस्यापि ग्रामस्य सत्केऽन्यस्मिन् पाटकादौ ग्रामान्तरे वा गृहस्थ्यभूत्ततस्तत्र भिक्षाद्यर्थं व्रजन्तं निजपितरं साधुं दृष्ट्वा मातुः सन्देशकं ददाति यथा हे तात मज्जन-न्यास्त्वमेवं कथयेर्यथा तत्कार्यं तव प्रतीतं यथा त्वं जानासि तथैव सम्पन्नं यथा वा जानासि तथा वा तत्त्वया विधेयमित्येवमसौ साधुसङ्घाटकस्य शेषलोकानां चार्थानवगमादुभयच्छन्नसन्देशक इति। इह च सर्वत्र दोषा गृहस्थव्यापारणादिना जीवोपमर्दादयो

णेया। मष्टसन्देहस्स धाभिस्स विसेसओ दोसा आख्यानकेनोच्यते। तथेदं

एयंमि गामे उज्जुओ नाम कोडुंबिओ, तस्स य रेवई नाम धूया। सा य-सग्गामवासिणा एगेण कोडुंबिएण परिणीया। तीसे कालंतरे एगो पुत्तो दुहिया य जाया। सा धूया पच्चासण्णगोउलगामवासिणा एगेण कोडुंबियपुत्तेण परिणीया। एत्थन्तरे उज्जुयभज्जा पंचत्तमुवगया। तओ उज्जुओ संसारभयभीओ धम्मघोसाणं थेराणं समासे पव्वइओ। विहरमाणो तम्मेव गामे नियधूयाए रेवईए वसहीए सपरिवारनियगुरुसहिओ ठिओ। तम्मि पत्थावे तायं दोण्हवि गामाणं परोप्परं वेरं आसि सेणापरिनिवासिणासेण एयस्सुवरि धाडी सज्जिया। सो य उज्जुयसाहू गोउलगामे भिक्खट्ठा पट्ठिओ। रेवईए दुहियानेहेण भणिओ। जइ ताय तुमं गोउलगामे वच्चिहिसि। तओ मे दुहियाए नियदोहित्तियाए कहेज्जसु, जहा तुह जणणीए भणियं, जम्हा अम्ह गामो तुम्ह गामस्सुवरि धाडीए अप्पाए आगमिस्सइ त्ति। तुमं परमत्थं ठवेज्जसु त्ति। तेण तहेव कयं। तीए नियभत्तुणो, तेण य गामस्स कहियं। गामो सण्णद्धबद्धकवओ, सुसज्जो जाओ। इयरो य पभाए आगओ। महाजुज्झं जायं। तस्स रेवईए भत्ता पुत्तो य धाडीए सहागया। आगन्तूण गोउलगामेण सह जुज्झो। तिण्णिवि जुज्झे मया। धाडी भज्जिया। रेवई भायरपुत्तमरणं नाउं रोइउं पयत्ता। तीसे समासे बहुजणपरंपरयं लोया भणंति य जह गोउलगामो धाडी पंथी य आयन्नो तो भत्तपुत्तो न सुज्झंतो, तेण तुह भायरपुत्तो न मरंता। ता केण पावेण मो आणाविओ, तं सोऊणं तीसे पिउणो उवरि कोवो जाओ। जहा मह भए भणन्तीए तस्स समासाउ दुहियाए भणियं तो किं साहुवेसविडंबएण साहियं ति चिंतिय रोयंतीए भणियं। जहा मे भायरपुत्तमरणेण भयए सिरि लोगेण सो साहू खिसिओ उड्डाहो य जाउ त्ति गाथार्थः ॥९१॥

उक्तं दूतिद्वारं, अथ निमित्तद्वारमाह—

**जो पिंडाइ नेमित्तं, कहइ नेमेत्तं तिकाल वेसयं पि। लाभालाभसुहासुह—जीविअमरणाइ सो पावो॥६२॥**

व्याख्या—यः कश्चिद् व्रती पिण्डादिनिमित्तमाहाराद्यर्थमादिशब्दादुपध्यादिपरिग्रहः। भक्तवस्त्रादिलिप्सयेत्यर्थः। कथयति

गृहिणां निवेदयति व्यापारयतीति यावत्। निमित्तं ज्ञानविशेषरूपं त्रिकालविषयमपि अतीतादिकालत्रयगोचरमपि। न त्वेककाल-

विषयमेवेत्यपेरर्थः। यथा हे श्राद्धा! अतीतदिने तवैतज्जातं इदं भविता, साम्प्रतं चेदं भवते वर्त्तते इत्यादीति। किं विषयं पुनस्तदि-

त्याह 'लाभे'त्यादि तत्र लाभोऽभिलषितावाप्तिस्तद्विपरीतोऽलाभः। आल्हादरूपं सुखं, तदभावोऽसुखं दुःखमित्यर्थः। जीवितं प्राण-

धारणं, मरणं प्राणत्यागरूपं, अमीषां द्वन्द्वे लाभादीनि मरणान्ता(न्तान्या)दियस्य तत्तथा। लाभादिविषयमित्यर्थः। आदिग्रहणाच्चि-

न्तालूकावृष्टिभेदबन्धुसमागमसुभिक्षदुर्भिक्षादिग्रहः। यश्चेदं कथयति सोऽनन्तरोक्तः साधुः किमित्याह पापः पापोपदेशकत्वात्

पापीयान्। तदित्थं लाभादिसूचककालत्रयगोचरनिमित्तव्यापारणाल्लब्धः पिण्डो निमित्तपिण्ड इत्युच्यते। दुष्टश्चायं यतस्त्रिविधेऽप्येत-

स्मिन् कथ्यमाने आत्मोभयपरविषया वधादयोऽनर्थाः सम्पद्यंते। तत्रात्मविषये साधुर्वधादिकं माप्नोति। उभयविषये साधुर्वधादिकं

माप्नोति जीवोपमर्दश्च जायते। परविषये जीवोपमर्द एवेति। वार्त्तमानिके च सद्य इहलोकेऽपि प्रत्यपाया जायमाना दृश्यन्ते।

त्राख्यानकं यथा—

एगंमि सन्निवेसे आसि पुरा गामभोइओ एगो। सोहग्गाइगुणजुया भज्जा से सुंदरी होत्था॥१॥ देसंतरंमिय गओ रन्ना-

एण अन्नया सो उ। भज्जं मोत्तुं गामे तत्थ य नेमित्तिओ निउणो॥२॥ एगो साहू पत्तो भिक्खट्ठा सो गओ तीए गेहे। तं दट्ठूणं

तो एयं मारिस्सं निब्भंतं भणइ तो एसो ॥२१॥ रोसेण फुरफुरेंतो भो भो पव्वइयग ! मह इमीए। वडवाए जं गब्भं चिठइ तं कहसु नाऊणं ॥२१॥ तेण भणियं किसोरो पंचहिं पुंडेहि संजुओ अत्थि। पच्चयहेउं तीए पोट्टं फालावियं तेण ॥२२॥ दिट्ठे तारिस उच्चिय जारसिओ अक्खिओ सो किसोरो। तं दट्ठुं तस्स तओ कोवोवसमो समणुजाओ ॥२३॥ भणिओ साहू तेणं जइ एयं सव्वयं जइ न हुन्तं। तो तुह उदरं एयं फालावितो अहं नियमा ॥२४॥ तम्हा जाईण(णीय)मेयं इहपरलोए अणत्थकरणखमं। नो कहवि अनुन्नायं जिणेहि काउं(?)हिएसीणं ॥१॥ ननु साधोर्वधादिकं न किञ्चिज्जातमिति तस्य करणे को दोषः? उच्यते वडवादिघातादयो दोषा अत्रापि जाता एव। तथा ये च पञ्चपुण्ड्रकिशोरकादिपरिज्ञानेन परस्य प्रत्ययमुत्पाद्य स्वस्य मारणादिकरणं पारदारिकादिदूषण-मुत्तारयिष्यन्ति ते कियन्तो भविष्यन्ति, विरला एवैते स्युः। एवमतीतादिनिमित्तेऽपि भावनीयमिति गाथार्थः ॥६२॥

उक्तं निमित्तद्वारमथाजीवनाद्वारमाह।

**जच्चाइधणाण पुरो, तग्गुणमप्पं पि कहिय जं लहइ। सो जाईकुलगणकम्म—सिप्पआजीवणापिंडो ॥**

व्याख्या—जात्यादीन्येव धनं स्वोत्कर्षादिहेतुतया वित्तं येषां ब्राह्मणादीनां ते जात्यादिधनास्तथा च विप्रादेर्जातिरेव ब्राह्मणत्वादिका धनं तया ह्यसौ सर्व्वजनोत्कृष्टमात्मनं प्रख्यापयति, निर्वहति च। आरक्षकादीनां कुलमेव धनं तेन तेषां निर्व्वाहादिभावात्। मल्लादीनां बाहुमुष्टियुद्धादिक्रियैव धनं। कृषीवलादीनां हलवाहनादिना कृष्यादिकर्म्मैव, चित्रकरादीनां चित्रकरणादिशिल्पमेव धनमिति तेषां जात्यादिधनानां दातॄणां ब्राह्मणानां पुरतोऽग्रतः 'तग्गुणं'ति तेषां जात्यादिधनानां सम्बन्धी गुणो जात्यादिधर्म्मो यस्यात्मनः स तद्गुणस्तं दातृसमानजात्यादिधर्मकमित्यर्थः। आत्मानमपि न केवलं परमित्यपेरप्यर्थः। कथयित्वा तत्सत्कहवनादि-

स्यादिति। यदा पृष्टोऽपृष्टो ब्राह्मणोऽहमित्यात्मानं जातिमन्तं साक्षादेव कथयति तदा स्फुटवचनेनैव तद्गुणात्मनः प्रकाशनाज्ञा-
त्युपजीवनं भवति। तत्रापि मायामृषावादादयो दोषा वाच्याः। एवं क्षत्रियादिजातेरप्युपजीवनं ज्ञेयम्। कुलोपजीवनं यथा उग्रकुलेषु
भिक्षार्थं प्रविष्टः साधुरुग्रपुत्रं हडिमभृतीनि समारचयंतं दृष्ट्वा तत्पितरमाह, यथा हव्यादीनामवितथाऽकरणाद् ज्ञायते यथा सुशिक्षित-
प्रक्रियस्योग्रपुत्रोऽयमित्यादि एवं भोगादिकुलेष्वपीति। गणोपजीवनं यथा मल्लादिगृहे भिक्षार्थं प्रविष्टः साधुस्तान् युद्धादिक्रियानिरतान्
व्यवलोक्य कथयति। यथा मल्लानां युद्धप्रस्तावे वासुदेवादिप्रतिमाप्रणमनखड्गबाहुयोधनादिव्यवस्थाभापणं तथा कखाड(अक्षवाट)के
प्रविष्टस्यैकस्य मल्लस्य निजभूम्याक्रमणेन प्रतिद्वन्द्विमल्लघाताय पार्श्वे गमनं ग्रीवाबन्धादि च स्यात्, धरणिपातछुप्तांकयुद्धादिप्रकटनं
च भवतीति। ततो मल्ल एवासौ गार्हस्थ्य आसीदिति स्वगणपक्षपातादाहारादि दापयन्तीत्यादिपूर्ववत्। कर्म्माजीवनं यथा कृपी-
वलस्य गृहे भिक्षार्थं प्रविष्टः कृपीवलस्य पुरतः साधुर्भणति यथा यदि प्रभूतं द्रव्यं कृपिकारापकाद्वणिगादेः कृपीवलो लभते तदा
हलादीनि शुभानि करोति। अथ स्तोकं तदा अन्यथापीति। कृपिकारापकोऽपि यदि प्रभूतद्रव्यवान् स्यात् तदा तानि शुभानि कार-
यति। अथ स्तोकद्रव्यवान् तदा अन्यथापीति। तच्छ्रुत्वा गार्हस्थ्ये कृप्यादिकर्म्म निपुणोऽसावासीदित्यादि पूर्ववत्। शिल्पाजीवनं
यथा शिल्पिनो गृहे प्रविष्टः शिल्पिनः शिलावर्त्तकादेः पुरतो जल्पति यथा यदि प्रभूतं द्रव्यं शिल्पी लभते तदा शुभानि देवकु-
लादीनि कारयति। अथ स्तोकं तदा इतरथा। एवं कारापकेऽपि वाच्यमिति। ततः शिल्पिकोऽसौ पूर्वमासीदिति संभाव्य स्वशिल्पि-
त्वपक्षपातात्तस्यासावशनादि दापयतीति। एवं च यदुपजीवनेन यः पिण्डो लभ्यते स तेन व्यपदेश्यो ज्ञेय इति गाथार्थः ॥६३॥

अधुना जात्यादीन्यनन्तरगाथोत्तरार्द्धोपात्तानि व्याख्यातुमाह।

तदुर्म्मनस इष्टवियोगादिविधुराः । अवान्धवाः स्वजनादिरहिताः । आतङ्कवन्त आकस्मिकज्वराद्युपेताः । जुङ्गिताङ्गाः कर्त्तितहस्त-
पादाद्यवयवा इति । शुनकाः श्वान आदिर्येषां ते शुनकादयः आदिशब्दात् काकशुकयक्षप्रतिमादिग्रहः । ततः श्रमणाश्चातिथयश्चे-
त्यादि द्वन्द्वस्तेषां भक्ता बहुमानपरा ये गृहस्थास्तेषां पुरतः आत्मानं स्वं, किमित्याह (ग्रं० २५००) तद्भक्तं तेषु श्रमणादिषु विप-
येषु भक्तं बहुमानवन्तं दर्शयति प्रकाशयति यः साध्वाभासः स 'वणीमो'त्ति प्राकृतत्वाद्वनीपक इत्युच्यते । कथं पुनरात्मा तद्भक्तो
दृश्यते ? उच्यते श्रमणादिप्रशंसाकरणत इति । यथा कश्चित् साधुः भिक्षार्थं गृहे प्रविष्टो निर्ग्रन्थानाश्रित्य वक्ति यथा भो श्रावक-
तिलक ! तवैते गुरवः सातिशयश्रुतोपेताः शुद्धक्रियानुष्ठानपालनपरा अत्यन्तं मोक्षाभिलाषिण इति । तथा शाक्योपासकगृहं प्रविष्टः
शाक्यांस्तत्र भुञ्जानान् दृष्ट्वा तद्भक्तानां पुरतस्तत्प्रशंसां कुरुते, यथा अहो शाक्याश्चित्रलिखिता इव निश्चला भुञ्जते । युक्तमित्थं
भोक्तुं । तथा दयालवो दानशीलाश्चैते । तथा रासभवदत्यन्तं मैथुनप्रसक्तेषु द्विजेष्वप्यशनादि दत्तं न निष्फलं भवति किं पुनः शा-
क्यमुनिष्विति । एवं शेषानपि तापसादीनाश्रित्य तत्प्रशंसाकरणेन वनीपकत्वं ज्ञेयम् । अतिथिभक्तेषु(क्तानां) पुरतोऽतिथिदानं प्रशस्यं
वदति यथा प्रायेण लोक उपकारकेषु प्रत्युपकाराय यतते, सर्व्वदा परिचिते वा, तन्निश्रया आश्रिते वा नतु मार्गपरिश्रान्तातिथि-
रूपप्राघूर्णकेष्वतस्तेषामशनादि दत्तं महते पुण्याय, तस्यैव च दानं प्रशस्यमुच्यते इति । ब्राह्मणभक्तानामग्रतस्तत्प्रशंसाद्वारेण तद्दान-
माहात्म्यं ख्यापयति । जातिमात्रोपजीवेष्वपि द्विजेषु दत्तं भक्तादि बहुलं स्यात् । किं पुनर्यजनादिषट्कर्म्मनिरतेषु धर्म्मकथादिना
जननिस्तारकेषु तद्दत्तं हि प्रभूतकालवेद्यस्वर्गादिसुखफलकृदिति । कृपणभक्तानां पुरतस्तद्दानोपबृंहणां कुरुते । यथा अयं लोकः
पूजितपूजकस्ततो य एवं पङ्ग्वन्धदीनहीनाङ्गेभ्योऽशनादि दद्यात् स एव दानपताकां जगति गृह्णातीति तत्प्रशंसां कुरुते । यथा किल

दापयेयुरिति साधोरात्मविराधना स्यात्। एवं ब्राह्मणादिष्वपि प्रशंसायां मिथ्यात्वस्थिरीकरणमृषावादादयश्च दोषाः स्युरिति गाथार्थः ॥

उक्तं वनीपकद्वारमथ चिकित्साद्वारमाह । आहारकारणेण वि दु विह,तिगिच्छं कुणइ मूढो ॥६६॥

भेसज्जवेज्जसूयण–मुवसामणवमणमाइकिरियं वा । 'भेसज्जवेज्जसूयणं' ति तत्र भेषज्यं

व्याख्या—सूक्ष्मबादरभेदाद् द्विविधा चिकित्सा स्यात्तत्राप्याद्या द्विविधा तां वक्तुमाह करोतीति योगः । यथा

त्रिफलाद्यौषधविशेषो, वैद्यो भिषक् तयोः सूचना उछिङ्गना अनभिज्ञस्य रोगिण एतद्द्वयावबोधनेत्यर्थस्तां प्रतिकारम् ? इति पृच्छति स

कश्चिद् रोगार्त्तो गृही भिक्षाद्यर्थं गृहे प्रविष्टं साधुं दृष्ट्वा भगवन् ! एतस्य मदीयव्याधेर्जानीषे कमपि ततोऽस्य(स्यान-

प्राह भो श्रावक ! यादृशं तवेदं गंडादिकं वेदनाहेतुरस्ति तादृशं ममाप्यासीत्तच्चामुकेनौषधिना मम नष्टवेदनमभूदिति रोगप्रतीकारं

भिज्ञस्य)सतो भैषज्यकरणाभिप्रायोत्पादनाद् भैषज्यसूचनं कृतं। यद्वा रोगिणा चिकित्सां पृष्टो वक्ति किमहं वैद्यो येन द्विरूपापि

जाने ? इति । एवं च वदता रोगिणोऽनभिज्ञस्य सतो वैद्यं पृच्छामीति परिणतिविधानाद् वैद्यसूचनं कृतमिति । इयं च शर्करादिभक्षणेनोदीर्णपित्तादेरुपशम

सूक्ष्मचिकित्सेत्येको भेदोऽथ बादरचिकित्सामाह । 'उवसामणवमणमाइकिरियं व'त्ति तत्र काथकरणस्वेदनविरेचनसिरोवेधक्षाराग्नि-

उपशमनं, पटोल्यादिकटुकौषधसंयोगनिष्पन्नक्वाथपानादिनोर्ध्वमुद्गिरणं वमनं आदिग्रहणात् चोपशमनवमनादिक्रिया तां, वा

कर्म्मादिक्रियाग्रहः । गोऽलाक्षणिकस्ततः उपशमनं च वमनं च ते आदिर्यस्याः सा चासौ क्रिया आहारस्य तुच्छग्रास-

विकल्पे, इत्येवं द्विविधचिकित्सां करोतीति योगः । उपलक्षणत्वादन्येन वा कारयति । किमर्थमेतां करोतीत्याह द्विप्रकारप्रतीकारं

मात्ररूपस्य कारणेनापि तन्निमित्तमपि न केवलमुपकरणादिकारणेनेत्यपेरर्थो द्विविधचिकित्सां सूक्ष्मबादरभेदाद्

तपसस्तु शापदानादिना राजवाछभ्यात्तु नगरादेर्निस्सारणदण्डादिना, शरीरसामर्थ्यान्मुष्टिप्रहारदानादिना मामनर्थं प्रापयिष्यतीति । अत्र च सर्व्वत्र कोप एव पिण्डोत्पादने मुख्यं कारणं द्रष्टव्यं कोपपिण्डस्य प्रस्तुतत्वात् विद्यातपःप्रभृतीनि तु तत्सहकारिकारणान्येवेति न विद्यापिण्डादिभिः सहास्य लक्षणसांकर्यमाशङ्कनीयमिति । स किमित्याह । क्रोधादुत्पादितः पिण्डः क्रोधपिण्डः, स उक्तरूपो विज्ञेयः । इह चोदाहरणं सूत्रकारो लाघवार्थं 'कोहे घेवरखवगो' इत्यग्रेतनगाथांशेनाग्रे वक्ष्यति । वयं तु स्वस्थानत्वादत्रैव ब्रूमस्तच्चेदं, क्रोधे क्षपकज्ञातं यथा—

इह आसि भरहवासे नयरं नामेण हत्थकप्पंति । तत्थ य एगो विप्पो अ होसि सद्धम्मकम्मरओ ॥१॥ तस्स य गेहे जायं अहन्नया मयगभत्तकरणं ति । तत्थ य भिक्खमडन्तो विगिट्ठतवओ महाखवओ ॥२॥ मासस्स य पारणए संपत्तो तग्गिहे तओ तेण । दिज्जन्ते दट्ठूणं घयपुन्ने भूमिदेवाणं ॥३॥ तेणावि जाइया तो पडिसिद्धो बंभणेहिं तो कुविओ । अन्नहिं दाहित्थेवं, भणमाणो निग्गओ स मुणी ॥४॥ अह अन्नं माणुस्सं पंचम्मि दिणे चेव दिव्वजोएण । पंचत्तमुवगयं तस्स मासिए सो पुणो पत्तो ॥५॥ पुणरवि तहेव तेणं दिज्जन्ते बंभणाण घयपुन्नो । दट्ठूणं तेणाविय, विमग्गिया तेहि पडिसिद्धो ॥६॥ कुविओ नीसरिओ सो तहेव वयणं मुहेण पभणन्तो । अन्नंमि दिज्जइ त्ति य जावन्नमाणुसमतीयं ॥७॥ तस्स वि मासियभत्ते, समागओ कहवि दिव्वजोएण । पुणरवि तहेव तेहिं पडिसिद्धो निग्गओ कुविओ ॥८॥ दिज्जइ अन्नंमि अन्नं (य तं) मुहेण वयणं भणन्तओ स मुणी । तं सोउं थेरेणं एगेण दुवारवालेण ॥९॥ चिन्तियमिमेण मुणिणा, जहऽन्नहिं दाहिहत्तिवयणेण । पुरओवि दोन्निवारा साव (सो अ) दिन्नो च्चि वस्स फलं ॥१०॥ दोमणुयमरणरूवं दिट्ठं संपयं तइयवारं । एसो दिन्नो निसि(सर)उ, ता मा सव्वाणि वि मरंतु ॥११॥ गिहवइणो

परिया के वि खुड्डेणो समोसढा। इउ य तत्थ एगंमि पत्थावे सेवइयाऊसवो उवट्ठिओ। तत्थ पभाए चेव तरुणसमणाणं परोप्परं केलीए उल्लावा पवत्ता। तत्थ एगेण खुड्डएण भणियं। जहा भो समणा अज्ज भोयणवेलाए घरे घरे सेवइयाउ लब्भिहिंति किन्तु पभाए चेव जो ताउ अम्हं सव्वेसिं जहिच्छाए भोयणकरणजोग्गाउ आणेइ सो नाम लद्धिमंतो। तउ एगेण खुड्डएण वुत्तं जहाऽहं आणेमि। इयरेहिं भणियं आणेहिसि परं न घयगुलसहियाउ ताहिं न अम्हं कज्जं। खुड्डएण भणियं। जारिसियाउ इच्छह तारिसियाउ जइ न आणेमि ता, नियनामं पि न वहेमित्ति गरुयं नंदिभायणं गहिउं निग्गओ इंददत्तइब्भस्स गिहं पविट्ठो दिट्ठाउ य पउराउ सेवइयाउ रद्धाउ। घयगुलाणि पउणीकयाणि चिट्ठंति। बहुपयारं पियंगुमइया सयासाउ जाइयाउ। तीए बाढं पडिसिद्धो। तेण संजायाहंकारेण वुत्तमवस्सं मए एयाउ गिण्हियव्वाउ। तीए भणियं जइ तुमं किं पि लहिसि ता, मम नासउडियाए मुत्तियं ति। तएणं गेहाउ निग्गंतूण कोइ पुट्ठो जहा कस्स सन्तियं इमं गिहं? तेण भणियं, इंददत्तइब्भस्स। खुड्डेण भणियं इण्हि सो कत्थ? तेण वुत्तं परिसाए, तत्थ गंतूण परिसाजणा पुट्ठा। जहा को एत्थ इंददत्तो इब्भो? तेहिं भणियं, तेण किं कज्जं? खुड्डएण वुत्तं तं किंचि जाइस्सामि, सो य तेसिं मइणिवइओ हवइ त्ति तेहिं वुत्तं अम्हे जायसु सो किविणो न किंचि दाहिसी। इंददत्तेण मम उहावणा भविस्सइ त्ति चिंतिय पुरओ ठाउं खुड्डगो वुत्तो जहा—अहं इंददत्तो इमे केलीए एवं जंपंति, जं तुमं मग्गासि तं दाहामि। खुड्डएण तस्स वभिचाररक्खणत्थं वुत्तं। जहा एएसिं छण्हं पुरिसाहमाणं समो महिलियामुमणिसो(माणसो)हवसि ता न मग्गेमि, अह न एरिसो ता इमीसे महालियाए परिसाए मज्झे किंपि तुमं मग्गेमि, तेहिं भणियं के छप्पुरिसाहमा?। सो भणइ निसुणह। सडंगुलि १ बगुडावे २ किंकरे ३ तत्थण्हायए ४। गिद्धावरिङ्खिय ५ हद्दनए, य ६ पुंरिसाहमा छओ ॥१॥ तत्थ सडं-

य तच्चरियसूइया इमा गाहा आगमे पढिज्जइ। 'जहा जहा पएसिणिं जाणुगमियालित्तउ भमाडेइ। तहा तहा से सिरवेयणा य, णस्सइ मुरुंडरायस्स' ॥१॥ तउ पणट्ठियसिरोवेयणेण रण्णा अहियथरं परितुट्ठेण सूरिणो विउलेणं असणाइणा पडिलाभिया। अणुदियहं च दंसणभत्तीए समुज्जुओ जाओ। एवमणेगसो राया सूरिगुणावज्जियमाणसो संवुत्तो त्ति। एत्थऽन्ने पाडलिपुत्ते नयरे मुरंडो नाम राया सालिवाहणाउ विभिन्नो होत्थ त्ति भणंति। एवं बहुहा पवयणुन्नइं विहेऊण कुन्देन्दुधवलजसेण तिहुयणं धवलीऊण दीहपज्जायं परिपालिऊण बहुविहे य सिस्से वायणाइणा निप्फाइऊण चूडामणिमाइनिमित्तसत्थाईहिं निययाउयपमाणं जाणिऊण संघसमक्खं आराहणापुव्वयं कालमासे कालं काऊण सूरी देवलोगं गउ त्ति। पसंगेण सव्वमेव भणियं। एत्थ पुणो रण्णो सिरोवेयणोवसमे भत्त-पाणाइणा पडिलाभणमेत्तसरूवेण मंतपिंडेण चेव पगयं।

तथा चूर्णपिण्डेऽन्तर्द्धानं प्रतीत्य चाणिक्यमंत्री निदर्शनं यथा—पाडलिपुत्तं नाम नयरं आसि। तत्थ य चंदगुत्तो नरवई तस्स य चाणक्को नाम महामंती। तत्थ य जंघाबलपरिहीणा संभूइविजयाभिहाणा सूरिणो परिवसंति। अण्णया य दुब्भिक्खं जायं। आयरिएहिं चिंतियं। जहा एयं सूरिपयजोग्गं नियसीसं आयरियत्तए ठाविउं सयलगच्छसहियं सुभिक्खे देसंतरे पट्ठवेमि। सयमेत्थेव एगागी चिट्ठामि ता ताव एयं जोणिपाहुडं सिक्खवेमि त्ति रहे तं सिक्खविउं पवत्ता। तत्थ य पच्छन्नठिएहिं दोहिं खुड्डएहिं अंजणं कहिज्जंतं सुयं। जेण अंजियाहि अच्छीहिं न केणइ दीसिज्जइ। आयरिएहिं तहेव आयरियत्तणे सो ठाविओ सयलगच्छसहिओ पेसिओ ते खुड्डया आयरियणेहेण पुणो वि वलिया, सेसो गच्छो निद्दिट्ठठाणे संपत्तो। गुरुहिं ते भणिया। दुट्ठु तुब्भेहिं कयं जे समागया संपयं एत्थेव संतोसनिरया संता विहरह। तउ सयमेव हिंडिऊण समुद्दाणट्ठा आयरिया जंकिंचि भिक्खाए आगच्छइ तं

**सोहग्गदोहग्गकरा, पायपलेवाइणो य इह जोगा । पिंडट्ठमिमे दुट्ठा, जईण सुयवा सिणमईण ।।७४ ।**

व्याख्या—सौभाग्यदौर्भाग्यकरा जनप्रियत्वाप्रियत्वविधायकाश्चन्दनगन्धधूपादयो द्रव्यविशेषा योगाः स्युरिति योगाः, तथाहि किञ्चिच्चन्दनादि जलादिना घृष्ट्वाऽभिमन्त्र्य च दुर्भगः पाय्यते, शरीरं वा अभिमन्त्रितधूपेन धूप्यते, गन्धा वा शिरसि निक्षिप्यते ततः सुभगः स्यादिति, एवं दुर्भगत्वेऽपि वाच्यं । तथा पादप्रलेपादयश्चरणखरण्टनप्रभृतय आकाशगमनजलाग्निस्तम्भादिफला द्रव्य-समूहक्षोदरूपा औषधविशेषाः, चः समुच्चये । इह जगति योगा योगशब्दवाच्याः स्युः । ननु चूर्णयोगयोर्द्वयोः क्षोदरूपत्वेऽपि परस्परं को विशेषः ? उच्यते, देहस्य बहिरुपयोगी चूर्णो, बहिरन्तश्च योगो, यतोऽसावाहार्यानाहार्यभेदाद् द्विविधः स्यात्तत्र जलपानादिना अभ्यवहार्य आहार्यः, (तदितरोऽनाहार्यः) पादप्रलेपादि । तत्र पादप्रलेपरूपे योगपिण्डे आख्यानकं यथा—

आभीरविसए अयलउरं नाम नयरं आसि । तस्स आसण्णाउ कण्हाविन्नाभिहाणाउ दुवे नईउ । तासिं अंतरे बंभो नाम दीवो । तत्थ य पंचहिं तावससएहिं सहिओ एगो तावसकुलवई परिवसइ । सो य संकंताइपव्वेसु सतित्थुब्भावणाइनिमित्तं सव्वेहिं तावसेहिं सहिओ पाय-लेवेणं कन्हमुत्तरित्तु अयलउरं आगच्छइ । तत्थ लोगो आउट्टो भोयणाइसक्कारं करेइ । सावयाणं पुण खिंसं करेइ, जहा तुम्ह गुरूणं ए-पारिसी सत्ती नत्थि । सावएहिं वइरसामिणो माउलगाणं अज्जसमियायरियाणं अक्खियं, तेहिं भणियं य, थेवमेयं जं माइट्ठाणेण पाय-लेवं किच्चा सो नइं उत्तरइ । तउ सावएहिं तस्स माइट्ठाणपयडणत्थं सपरिवारस्स भोयणेण निमन्तणं कयं । गिहे उववेसिय पाय-धोयणं ढोइयं । तेन भणियं न धोवावेमि सावएहिं अधोविएहिं पाएहिं भुंजावन्ताण लोए अविणओ होइ त्ति भणंतेहिं चलावि धोइया पाया । भुंजाविओ य णियट्ठाण गमणाय चलिओ सावया य सरिसा चलिया । जाव कण्हं उत्तरइ ता सपरिवारो बुडिउं

र्त मूलिकाकल्कमिश्रजले स्नानविधापनं, तदादिर्यस्य धूपनक(का)ण्डकरणादेस्तन्मङ्गलमूलिस्नपनादि । तथा गर्भविवाहकरणघातादि, तत्र गर्भ उदरान्तवर्त्ती मनुष्यादिसत्त्वः, विवाहः परिणयनं, तयोः प्रत्येकं करणघातौ विधापनविनाशौ, तावादिर्यस्य तत्तथा गर्भकरणं, गर्भघातस्तत्परिशाटनरूपः तथा विवाहकरणं विवाहप्रतिघातश्चेत्यर्थः । आदिशब्दात् स्त्रीणामक्षतयोनिक्षतयोनित्वकरणग्रहः । तत्रौ-षधप्रयोगेण सततमवाच्यदेशरक्तक्षरणं क्षतयोनित्वं तद्विपरीतमितरत्व(त्वं रक्त)स्यागम्यमानत्वात् । भक्ताद्यर्थं प्रति(क्रिय)माणं वा साधुना मूलकर्म्मोच्यत इति योगः । अस्य शब्दार्थनिरूपणायाह । 'भववणमूलकम्मंति' भवन्ति नारकादितयोत्पद्यन्तेऽस्मिन् जन्तव इति भवः संसारः, स एव वनमतिगहनत्वात्तरुखण्डरूपं काननं तस्य मूलं कारणं प्ररोहहेतुः कर्म्म ज्ञानावरणादिकर्म्मनिचयहेतुकाऽशुभा व्यापा-रक्रिया इति हेतोर्मूलकर्म्मोच्यते । यद्वा सूचनाद्विभक्तिलोपाच्च 'भववन'त्ति भववनस्पत्योः मूलं कारणं कर्म्म क्रिया इति कृत्वा मूलं च तत्कर्म च, मूलं वा प्रतीत्य कर्म्मेति विगृह्य मूलकर्म्मोच्यते । तत्र भवस्य मूलं कर्म्म तत्प्राप्तिनिबन्धना गर्भघातादिक्रिया तथा जातिविवक्षया वनस्पतेर्मूलं तत्प्ररोहकारणीभूतप्रविष्टोऽवयवस्तस्य औषधाद्यर्थं छेदादिक्रिया मूलकर्म्मेति । इदं च कीदृशमित्याह महापापं चिरकालवेद्यक्लिष्टाशुभकर्मनिबन्धनं शिष्टजननिन्द्यम् पापबहुलजनाचरणीयं चेति । अत एव भववनमूलमित्युक्तं । तत्र गर्भा-धानशाटरूपे मूलकर्म्मणि राजपत्न्यौ दृष्टान्तो यथा—

वसंतपुरे जियसत्तू राया । तस्स दो देवीउ । अण्णया विसयसुहमणुहवंताणं एगाए गब्भो पाउब्भूओ । इयरी इमीए पुत्तो भविस्सइ न मज्झ त्ति ईसानलेन डज्झंती अधिईए चिट्ठइ । एत्थंतरे एगो साहू भिक्खं अडंतो तीए गिहे पविट्ठो । तेण भणिया जहा भद्दे ! किं विच्छायमुही दीससि ? तीए वुत्तं जहा मम सवत्ती आवन्नसत्ता, पुत्तो तीए आइट्ठो नेमित्तिएणेति । तेण भणियं भद्दे ! ओसहप्पया-

रिणयणत्थं दिन्ना। आसन्नो आगओ वीवाहो। एसा मे दुहिया परिणिया समाणी भत्तुणा भिन्नयोनियत्ति जाणिय उज्झिज्झिहि त्ति चिंताए तन्माया अधिइमंता चिट्ठइ। एत्थंतरे भिक्खट्ठं भमन्तो एगो साहू भिक्खट्ठं तीसे गिहे पविट्ठो, दिट्ठा य सा, भणिया तेण जहा भद्दे! किमेरिसी दीससि। तीए दुहियावइयरो कहिओ। साहुणा आयमणोसहं पियणोसहं च दिन्नं अक्खयजोणिया जायत्ति। तहा एगाए नयरीए एगो सत्थवाहो आसि। तस्स य अन्नया नियभज्जाए समं रइकलहो जाओ। अउ अभिनिवेसवसा सत्थवाहेण तन्नयरनिवासिणो एगस्स सेट्ठिस्स धूया परिणयणत्थं वरिया। तं वइयरं परिजाणिय भज्जाए सत्थवाहो खमाविओ। वारिओ वि न चिट्ठइ सवत्तीचिंताए विद्दाणमुद्दी सा चिट्ठइ। महाचिंता एसा इत्थीणं, भणियं जेण वरि दालिद्दिउ, वरि अणाहु, वरि वरुड्डन्नालिउ, वरि रोगाउरु, वरि कुरूवु, वरि निग्गुणहालिउ वरि करचरणविहीणदेहु, वरि भिक्खभमंतउ ण पुणवि सवत्तिजुत्तुथइपति(जुत्तपति)संप- त्तउ। एत्थंतरे जंघापरिजिओ एगो साहू तीसे गिहे भिक्खट्ठं पविट्ठो पुट्ठा य सा जहा भद्दे! किं अधिइंमता दीससि। तीए वुत्तं- 'जो य न दुक्खं पत्तो, जो य न दुक्खस्स निग्गहसमत्थो। जो य न दुहिए दुहिओ न हु तस्स कहिज्जए दुक्खं'॥१॥ साहुणा वुत्त एवमेव नवरं 'अहयं दुक्खं पत्तो, अहयं दुक्खस्स निग्गहसमत्थो। अहयं दुहिए, दुहिओ ता मज्झ कहिज्जउ दुक्खं'॥२॥ तउ तीए सवत्तीवइयरो कहिओ। साहुणा ओसहं समप्पियं। भणिया य एयं केणइ पओगेण तीसे भत्तस्स पाणस्स वा मज्झे दायव्वं जेण सा भिन्नजोणिया हवइ। तउ भिन्नजोणिया सा इइ भत्तुणो कहिज्जसुत्ति सो न परिणेही। तीए तहेव कयं जाव भत्तुणा न परिणीयत्ति। विवाहघातरूपमप्यत्रैव जातमिति न पृथग् दृश्यते।

एतेषु च मूलकर्मरूपेषु स्नपनगर्भाधानतद्विनाशविवाहकरणतद्विघातादिषु पिण्डार्थं यतिना क्रियमाणेषु कार्यमाणेषु वा पड्जी-

ग्रहणैषणादोषानिति। तत्र ग्रहीतिर्ग्रहणं एषणमेषणा। ततो ग्रहणेऽशनादेर्ग्रहणकाले एषणा शङ्कितादिभिः प्रकारैरन्वेषणं ग्रहणैषणा तद्विषया दोषा ग्रहणैषणादोषास्तान्, दशेति दशसङ्ख्यान् लेशेन सङ्क्षेपेण भणामि कथयामि। तत्प्रस्तावनामाह, ते च ते पुनः दोषा इमे एतेऽनन्तरमेव वक्ष्यमाणस्वरूपा इति गाथार्थः ॥७६॥

तानेव यथानामग्राहमाह।

**संकियमक्खियनिक्खित्त-पिहियसाहरियदायगुम्मीसे। अपरिणयलित्तछड्डिय, एसणदोसा दस हवंति॥**

व्याख्या—'संकिय'त्ति विभक्तिलोपाच्छङ्कितं सम्भाविताधाकर्म्मादिदोषं भक्तादि। एवमुत्तरत्रापि। मिश्रं मुक्त्वा शेषपदेषु विभक्तिलोपो दृश्यः। तथा दोषवतो निर्देशेपि दोषदोषवतोरभेदाच्छङ्कारूप एषणादोष उक्तोऽवसेयस्तस्यैव विवक्षितत्वादेवं सर्वत्र। म्रक्षितमारुपितं। निक्षिप्तं न्यस्तं। पिहितं स्थगितं, संहृतमन्यत्र क्षिप्तं। 'दायग'त्ति सूचनाद्दायकदुष्टं। 'उम्मीसे' त्ति उन्मिश्रं पुष्पादिमिलितं, अपरिणतमप्रासुकीभूतादि। लिप्तं दुग्धादिखरण्टितं, छर्दितं परिसाटिमत्, समुच्चयार्थश्चकारो लुप्तो दृश्यः। इतेर्लोपादित्येवमेते एषणादोषाः पिण्डग्रहणदूषणानि। दशेतिसङ्ख्या भवन्ति जायन्ते इति गाथार्थः ॥७७॥

अथ शङ्कितद्वारं व्याख्यातुमाह।

**संकियगहणे भोए चउभंगो तत्थ दुचरिमा सुद्धा। जं संकइ तं पावइ दोसं सेसेसु कम्माई ॥७८॥**

व्याख्या–शङ्कितस्य (सं)भाविताधाकर्म्मादिदोषस्य भक्तादेर्ग्रहणे आदाने, तथा भोगो भोजनं शङ्कितस्येत्यत्रापि योज्यं। चशब्दः समुच्चयार्थो लुप्तो दृश्योऽत्र पदद्वये 'चउभंगो' त्ति चतूरूपो भङ्गः चतुर्भङ्गो भङ्गचतुष्टयं स्याद्यथा ग्रहणे भोजने च शङ्कितः भक्ता-

घते शेपयोरुद्धरितयोराद्यतृतीयभङ्गयोरित्यशुद्धावेताविति । अथ तृतीयप्रथमावाश्रित्याशुद्धतामाह ।
तृतीयो बहुतरदोपः । आद्यश्च बहुतमदोपः, उभयत्रापि भोजनस्य शङ्कितत्वेनाऽशुद्धत्वात् । भक्तादेर्ग्रहणकालेऽभ्यवहारकाले वा शङ्कते अमुकदोपदुष्टमिदमशनादीत्या-
यं कञ्चन दोपं 'कम्माइ' त्ति सूचनादाधाकर्म्मादिकं दूपणं । तमेव दोपं, व्याख्यानादाधाकर्म्मादिपञ्चविंशतिदोपमध्यादेकतरं कञ्चन पिण्डग्राही साधुः प्राप्नोति आप-
रेकते सम्भावयतीत्यर्थः । तत्राधाकर्म्मादयः पोडशोद्गमदोपाः शङ्कितस्य साध्यत्वात्तद्वर्जा नवैपणा-
दोपा म्रक्षितादयश्चेति समुचिताः पञ्चविंशतिः । अत्र हि ननु यदि शङ्काऽकल्पनीयताविधायिनी, एवं शुद्धमपि भक्ताद्यशुद्धं स्यात्
शङ्काकरणात्, अशुद्धमपि शुद्धमेतदिति निश्चित्य गृहीतं शुद्धं स्यादित्यत्रोच्यते, सत्यमेव तच्छङ्कापरिणाम एव शुद्धेरशुद्धेश्च कार-
णम् । यदि हि शङ्कायुक्तपरिणामस्तदा शुद्धमप्यशनादिकमशुद्धं करोति । शुद्धमेतदित्येवं निश्चित्य गृह्णन् भुञ्जानो वा विशुद्धपरिणा-
मोऽशुद्धमपि शुद्धं करोति। तदिहाशुद्धमपि छद्मस्थपरीक्षया निःशङ्कीकृतं शुद्धमेव स्यात्तथाहि श्रुतबलेनामायाविना प्रयत्नपरेण छद्म-
स्थेन संशोध्य यद्गृहीतं तदशुद्धमपि तेनानीतं केवल्यप्युपभुङ्क्ते इतरथा श्रुताप्रामाण्यं कृतं स्यात्तदप्रामाण्ये तद्दर्शितज्ञानादित्रयाभाव-
स्तदभावे ज्ञानादित्रयसाध्यमोक्षाभावस्तदभावे तदर्थं गृह्यमाणाया दीक्षायाश्च नैष्फल्यमिति गाथार्थः ॥७८॥

उक्तं शङ्कितद्वारमथ म्रक्षितद्वारमाह ।

**सच्चित्ताचित्तमक्खियं दुहा तत्थ भूदगवणेहिं । तिविहं पढमं बीयं गरहियइयरेहिं दुविहं तु ॥७९॥**

व्याख्या—सह चित्तेन चैतन्येन वर्त्तत इति सचित्तः सजीवः पृथिव्यादिः, चकारस्य द्विरुक्तिः सूत्रे प्राकृतलक्षणाद्, यद्वा
सद्विद्यमानं चित्तं यस्य स सच्चित्तः । तथा अचित्तो निर्जीवः पृथिव्यादिरेव । इह च पृथिव्यादिः पूर्वं सचित्तः स्यात्ततः स्वकाय-

इह प्रत्यासत्तिन्यायादचित्तम्रक्षितस्यैव च सर्व्वदैव मुख्यतया ग्रहणाच्च पूर्व्वं सचित्तम्रक्षितस्य क्रमपरिहारेणाऽक-
व्याख्या—सा विद्यते येषां द्रव्याणां तानि मत्वर्थीये संसक्तानि,
ल्पतोक्ता। पश्चादितरस्येति। तत्र संसक्तिर्मध्योत्पन्नैकेन्द्रियादिसत्त्वयुक्तत्वं। एतेषु मात्रकादेः खरण्टनतयापि जातेषु कदाचित् संसक्तिः स्यात्तानि
तानि च अचित्तानि च दधितक्रद्राक्षापानकादीनि। करमात्रं म्रक्षितमकल्प्यमित्युत्तरेण योगः। अयमर्थः संसक्तिमद्द्रव्यैर्दध्यादिभि-
संसक्ताचित्तानि तैः अगर्हितैरपीति शेषः। साक्षादेतैर्म्रक्षितं सद्दीयमानमकल्प्यमेकेन्द्रियादिवधदोषात् मात्रकादिलग्न-
र्लेपकृन्मध्वादिभिश्च हस्तमात्राभ्यां म्रक्षिताभ्यां देयं वा गर्हितवस्तुम्रक्षितमाह। लोकागमगर्हितैश्चेति। तत्र लोकः
मक्षिकाकीटिकापतङ्गादिसत्त्ववधदोषाच्च एतेनागर्हितवस्तुम्रक्षितमुक्तमथ लोकश्चागमश्च तौ, तथा च तयोर्मध्ये गर्हितानि निन्द्यानि
पृथग्जनः 'आगमे'ति अर्हत्प्रवचनं तदध्येता वा लोकोत्तरो यतिजनस्ततो म्रक्षितमकल्प्यमितीह सम्बन्धनीयं। अयमर्थः लोक-
यानि सचित्तवस्तूनि मांसादीनि तैः, चः समुच्चये। यतीनां साधूनां करमात्रं साक्षान्म्रक्षितं सदेतैर्म्रक्षिताभ्यां वा हस्तमात्राभ्यां
लोकोत्तरागमगर्हितैर्मांसवसाशोणितसुरामूत्रोच्चारादिभिः शिष्टजनस्याभक्ष्यापेयैः स्याद्यथा हस्तो म्रक्षितो मात्रं च,
दीयमानं सद्देयं यतीनामकल्प्यमुड्डाहादिदोषात्। इह चाचेतनद्रव्यैर्म्रक्षितयोर्हस्तमात्रयोश्चतुर्भङ्गः
हस्तो म्रक्षितो न मात्रं। मात्रं म्रक्षितं न हस्तो, न हस्तो म्रक्षितो न मात्रमिति। तत्र गर्हितवस्तुम्रक्षितत्वे भङ्गचतुष्टयेऽपि भक्ताद्य-
कल्प्यं संसक्तिमदादिद्रव्यवर्जागर्हिततक्राद्यचित्तवस्तुम्रक्षितत्वे कल्प्यमिति। अधुना सचित्तपृथिव्यादिभिर्म्रक्षिते हस्तमात्रके आश्रित्य
सचित्तम्रक्षितदेयस्याकल्प्यतामाह। शुष्कार्द्रसचित्तैश्चेति तत्र शुष्का अनार्द्राः आर्द्राश्चेपत्सजलाः सचित्ताः सजीवास्ततः शुष्काश्चार्द्राश्च
ते सचित्ताश्चेति विग्रहस्तैः पृथिव्यब्वनस्पतिभिरिति सामर्थ्याद् दृश्यम्। चः प्रकृतवाक्यापेक्षया समुच्चये। करमात्रं दातृहस्तकरो-

उदकमप्काय इत्यर्थः स चावटनद्यादिजलावश्यायहिमकरकादिरूपस्तस्मिन्। तथा 'अगणि'त्ति अग्निस्तेजस्कायः स च विध्यात-
मुर्मुरांगाराप्राप्तप्राप्तज्वालसमज्वालव्युत्क्रान्तभेदतया सप्तविधस्तस्मिन्। तत्र यः स्वल्पतया पूर्व्वं दृष्टया न दृश्यतेऽग्निः पश्चा-
च्छुष्कगोमयचूर्णादिके इन्धने तदुपरि क्षिप्ते वर्धमानो दृष्टया दृश्यते स विध्यात इत्युच्यते। ये च ईषत् पिङ्गलाग्निकणा अर्द्ध-
विध्यातभस्मोन्मिश्रास्ते मुर्मुर इत्युच्यन्ते। यश्च ज्वालारहितो निर्धूमोऽग्निः सोऽङ्गार इत्यभिधीयते। यत्र च चुल्यामग्नौ प्रज्वा-
लिते पिठरादिके चारोपिते यावज्ज्वाला पीठरे न लगति तावदसावप्राप्तज्वाल उच्यते। यदा च पीठरे ज्वाला लग्ना
तदासौ प्राप्तज्वाल उच्यते। यदा च ज्वालैवानीचोच्चत्वेन पिठरकसमा, पिठरकमुखान्ते ज्वालान्तो लग्न इत्यर्थः, तदाऽसौ
समज्वाल उच्यते। यदा च पिठरमुखमुल्लङ्घ्य ज्वालोर्ध्वं प्रव्रजति तदाऽसौ व्युत्क्रान्त इत्यभिधीयते। 'पवणे' ति पवनो
वातो वायुकाय इत्यर्थः। स च गुञ्जावातमण्डलिकादिभेदादनेकरूपो दृतिस्थश्च तस्मिन्, तत्र तावदचित्तमुखवातपूरिते
सति दवरकबद्धमुखे यस्तस्थो वायुः स कालमाश्रित्य सचित्तो मिश्रोऽचित्तश्च पौरुषीदीनैः स्यात्। तत्र वर्षहेमन्तग्रीष्मरूप-
स्त्रिरूपो कालः सामान्येन स्निग्धो रूक्षश्च भवति। तत्र स्निग्धः शीतो रूक्षश्चोष्णः। अयं च स्निग्धोऽप्युत्कृष्टमध्यम-
जघन्यभेदात्त्रिधा। रूक्षोऽपि च त्रिधा। तथा उत्कृष्टस्निग्धोऽतिशीतः, मध्यमस्निग्धो नातिशीतः। जघन्यस्निग्धः स्तोकशीतः।
जघन्यरूक्षः किञ्चिदुष्णः, मध्यमरूक्षो नात्युष्णः, उत्कृष्टरूक्षोऽत्युष्णः। तत्र च दृतिस्थो वायुरतिस्निग्धकाले पौरुषीमेकाम-
चेतनो, द्वितीयायां मिश्रः तृतीयायां सचित्त इति। मध्यमस्निग्धो द्वे पौरुष्यावचित्तस्तृतीयायां मिश्रश्चतुर्थ्यां सचित्तः।
जघन्यस्निग्धः पौरुषीत्रिकमचित्तः चतुर्थ्यां मिश्रः, पञ्चम्यां सचित्तः। रूक्षकाले पौरुषीनां स्थाने दिनानि। पौरुषीवृद्धिस्थाने च दिन-

रिहारेण यतनया ग्राह्यमपीति भजना । तत्र विनेयानुग्रहाय प्रतिकायमचित्तस्यानन्तरपरम्परतया निक्षेपसंभवा दर्श्यन्ते यथा–सचित्त-
मिश्रपृथ्वीकाये यत् पक्वान्नमण्डकादिकं व्यवस्थापितं तदनन्तरनिक्षिप्तं यच्च पक्वान्नादिकमेव प्रावृडक(?)च्छप्पकादावपि तं पिठरादि
च सचित्तमिश्रपृथ्वीकाये तत्परम्परनिक्षिप्तं । तथा यन्नवनीतस्त्यानीभूतघृतादिकं सचित्तमिश्रे उदके न्यस्तं तदनन्तरनिक्षिप्तं । यच्च
घृतपक्वान्नादिकं तरिकात्रप्यकादौ स्थापितं नावादि च जले तत्परम्परनिक्षिप्तं । तथा विध्याताद्यन्यतरभेदेऽग्नौ मण्डकादिनिहितमन-
न्तरनिक्षिप्तं । तदेव यदा स्थाल्यादौ स्थाल्यादि चाग्नावुपरि तदा परम्परनिक्षिप्तम् । अत्र च तेजस्काये परम्परनिक्षिप्तस्य ग्रहणमाश्रित्य
विशेषोऽभिधीयते । यथेक्षुरसपाकस्थानेऽग्नावुपरि स्थिते पिठरकटाहादौ मृत्तिकया पार्श्वेषु लिप्ते इक्षुरसः स्थितो यदि स्यात्तदपि च
यदि विस्तीर्णमुखतयाऽघट्टितकर्णं स्याद्विशालमुखाद्धि तस्माद्वारकादिना कृष्यमाणे दानाय रसादौ तत्कर्णा न घट्टन्ते, तथा बहिरिक्षु-
रसच्छर्दनाभावाद्यपरिशाटिमांस्ततस्याद्रसोऽपि च तत्क्षण एव क्षिप्तत्वान्नात्युष्ण तदा गृह्यते । एवं यत्र पिठरादौ गुडः पूर्वं क्वथितोऽभू-
त्तत्र जलं क्वथनाय क्षिप्तमीषत्तप्तमपि गुडरसेन भावितत्वाच्छीघ्रं प्रासुकीस्यात्ततो नात्युष्णमघट्टितकर्णपार्श्वावलिप्तकटाहस्थमपरिशाटि-
मदुष्णोदकमपि स्यात्तदपि गृह्यते । एवमन्नादिखरण्टितशेषपिठरस्थेषत्तप्तजलादेरपि ग्रहणं ज्ञेयम्। इह चेक्षुरसस्य दीयमानस्य यदि
कश्चिद्विन्दुर्बहिर्लगति स लेप एवावर्त्तते नत्वधश्चुल्लीमध्यस्थिततेजस्काये पततीति पार्श्वावलिप्तमिति कटाहस्य विशेषणं । घट्टितकर्णाच्च
तस्माद् गृह्यमाणे इक्षुरसादौ मृल्लेपस्य क्षरणाच्चुल्लीस्थाग्निविराधना स्यादित्यघट्टितकर्णत्वं विशेषणं । अत्युष्णे चेक्षुरसादौ गृह्यमाणे
दात्र्या स्थाल्यादेर्भाजनस्य दानायोत्पाटितस्य, साधुना तु वसतावानयनायोत्पाटितस्य पतद्ग्रहस्य दाहकतया डगिति भूमौ क्षेपा-
द्भङ्गः स्यात्तथा कष्टेन ददती दात्री साधुपतद्ग्रहे देयं प्रक्षिप्तुमशक्नुवती बहिरुज्झेत । एवं च पृथिव्यादिविराधना स्यादिति।

पावकेऽनन्तरनिक्षिप्तं पाकोत्पादितः कुम्भकारापाकादिकोऽपूपा पर्पटिकाः स्युः शालिपर्पटादि च यत्नेनोत्पाद्यते तदनन्तरनिक्षिप्त-मुच्यते इति विवक्षया तत्र कुम्भकारादीनां निक्षिप्तता । वाते परम्परनिक्षिप्तं वातोद्धूतबाष्पभृतवस्त्रादुपरिस्थितं मण्डकादि पाकोपरि वस्त्रं तदुपरि मण्डकादीनिक्षेपणा । वनस्पत्यनन्तरनिक्षिप्तं सचित्तव्रीह्यादिहरितफलादिष्वपूपादि न्यस्तं, पिठरकाद्य-न्तर्गतो मण्डकादि न्यस्तं पिठरादि च वनस्पताविति परम्परनिक्षिप्तं । त्रसेष्वनन्तरनिक्षिप्तं न्यस्तं अपूपादेस्तत्रानन्तरनिक्षिप्तं । बलीवर्दपृष्ठे यत्र(त्र)रूपो भरतः कुतुपादिर्वा न्यस्तस्तत्र च मण्डकादिकं निक्षिप्तमिति परम्परनिक्षिप्तमिति गाथार्थः ॥८१॥

उक्तं निक्षिप्तद्वारमथ पिहितद्वारमाह ।

सच्चित्ताचित्तपिहिए, चउभंगो तत्थ दुइमाइतिगे । गुरुलहु चउभंगिल्ले, चरिमे वि दुचरिमगा सुद्धा ॥८२॥

व्याख्या—इह पिहितस्य साध्यत्वात् परिहार्यापरिहार्यविभागं विना सामान्येन सचित्तेऽचित्ते वा पिहिते वस्तुनीति गम्यते । दीयमाने इत्यर्थः । सचित्तं सजीवमचित्तं निर्जीवं पृथिव्यादि, ततः सचित्तं चाचित्तं च ताभ्यां पिहितं स्थगितं, यस्मिन् पिण्डिस्यादि—'चउभंगो' त्ति सचित्ताचित्तपदद्वयेन चतूरूपो भङ्गचतुष्को भङ्गचतुष्टयं स्यादित्यर्थः । सचित्तेन सचित्तं पिहितं । अत्र सचित्तपृथि-व्यादिना सचित्तं पृथिव्यादिकमनन्तरम्परमित्यर्थः । तथा अचित्तेन सचित्ते, सचित्तेनाचित्तं, अचित्तेनाचित्तं पिहितमिति । अत्राप्यन-न्तरपरम्परपिहितता भावनीयापि स्वस्या । (ग्रं० ३५००) तेन तृतीयभङ्गे सजीवस्याचित्तदेयद्रव्यस्याच्छादकस्य सचित्तेनानन्तरपारम्परपि-हितसम्भवो विभाव्यते । यथा सचित्तपृथिव्याद्यविनाश्यमानमण्डकादिकं सचित्तपृथ्वीकायानन्तरं पिहितं, सचित्तपृथिव्यामर्भकस्थितमण्ड-कादिनाऽन्यत्र तु सचित्तपृथ्वीकायपरम्परापिहितं । तथा हिमादिनाऽन्यत्र तदेव सचित्ताप्कायानन्तरपिहितं, हिमादिगर्भकलशादिना-

स्थितकीटिकादिकशरावादिना पिहितं परम्परपिहितं । अत्र परिहार्यापरिहार्यविधिमाह । तत्र तेषु चतुर्भङ्गेषु मध्ये दुष्टं दोषवदकल्प्य-

चतुर्भङ्गो विद्यते यत्र स गुरुलघुचतुर्भङ्गवान् प्राकृते इल्लप्रत्ययस्य मतुबर्थत्वात् तस्मिन् । चरमेऽपि अचित्तेनाचित्तं पिहितमित्ये-

प्रस्तुतसंहृतदोषस्य तृतीयभङ्गेऽवतारो ज्ञेयस्तथाऽनन्तरपरम्परताऽत्र न व्याख्येया, संहरणस्य परम्परतया अघटनात् । तथा कल्पते तु, भक्तादि ग्राह्यम् पुनः स्यात्, 'चरमे' चतुर्थभङ्गे इति गाथार्थः ॥८३॥

नवरं चतुर्भङ्गेऽपि भजनया कल्पनीयतेत्याह ।

**तत्थ वि य थोवबहुयं, चउभंगो पढमतईयगाइण्णा जइ तं थोवाहारं, मत्तगमुक्खिव वि य वियरेज्जा ॥८४॥**

व्याख्या । तत्रापि तस्मिन्नपि चरमभङ्गेऽचित्तेऽचित्तं संहृतमित्येवंरूपे, चः पुनरर्थे, न केवलं सामान्यसंहृते, सचित्ताचित्तपदो-रथचतुर्भङ्ग इत्यपेरर्थः। किमित्याह । स्तोकबहुलक्षणे ये पदे शब्दरूपे ताभ्यां चतुर्भङ्गो विकल्पचतुष्टयं स स्यात् । यथा स्तोके स्तोकं, स्तोके बहुलं, बहुके स्तोकं, बहुके बहुकं संहृतमिति । तत्र स्तोकं स्वल्पं, बहुकं प्रचुरमुच्यते । तथा यत् संह्रियमाणं यन्मध्ये संह्रियते च ते द्वे अपि वस्तुनी शुष्के वा स्यातामार्द्रे वा तत्र शुष्कं पर्युषितं कूरादि, आर्द्रं तीमनादि । तत्रेह स्तोकबहुत्वे शुष्कार्द्रद्रव्यविशे-षणतया दृश्ये । यथा स्तोकं बहुकं वा शुष्कं तथार्द्रमपि । अधुनैतेषु कल्प्याकल्प्यभजनामाह । 'पढमतईयगाइन्न'त्ति स्तोके स्तोकं बहुके स्तोकं संहृतमित्येतौ प्रथमतृतीयौ भङ्गावाचीर्णौ भिक्षाग्रहणे शुद्धतयाऽङ्गीकृतौ । तेन स्तोके बहुके वा शुष्के स्तोकमार्द्रं संहृतं । स्तोके बहुके वार्द्रे स्तोकमार्द्रं संहृतमित्याचीर्णग्रहणं । संह्रियमाणस्यार्द्रत्वेऽपि स्तोकत्वेन दात्र्याः प्रज्ञापनया हस्तधावनादिदोषस्य रक्षयितुं शक्यत्वात् । तथा स्तोके बहुके वा शुष्के शुष्कं स्तोकं संहृतं । तथार्द्रे स्तोके बहुके वा शुष्कं स्तोकं संहृतमित्यपि कल्पते उक्तदोषाभावात् । पारिशेष्यात् स्तोके बहुकं, बहुके बहुकं संहृतमिति द्वितीयचतुर्थावशुद्धाविति दृश्यं । तेन स्तोके बहुके वा शुष्के, स्तोके बहुके वार्द्रे बहुकमार्द्रं संहृतमित्यनाचीर्णग्रहणं । संह्रियमाणस्य बहुत्वेन दात्र्याः प्रज्ञापनया हस्तधावनादिदोषस्य रक्षितुमशक्य-

ष्ठीवनलालः कम्पमानहस्तश्च स्यात्ततोऽसौ ददत् स्वयं पतेत् देयं मात्रं वा भूमौ पातयेत्, तत्र च कीटिकावधादयो दोषा ज्ञेयाः। तथाऽयमनादेयवाक्यत्वात्, देयस्यास्वामीति विचिन्त्य तस्मिन् ददति तत्पुत्रादयः साधौ वृद्धे वा उभयस्मिन् वाऽप्रीत्यादि कुर्युः। तथेह चतुर्थगाथान्त्यपादे ओघेन वक्ष्यति। ओघश्चोत्सर्ग उच्यते। तत उत्सर्गेण स्थविरादिदायकेष्वयं दर्श्यमाननिषेधो ज्ञेयोऽपवादेन तु यतनया केषुचिद् ग्रहणमप्यनुज्ञातमतो निषेधानन्तरं स्वे स्वे स्थानेऽपवादोऽपि दर्शयिष्यते। तत्र स्थविरमाश्रित्यायं ग्रहणविधिर्यथा स्थविरोऽपि पुत्रादिमध्ये यद्यादेयवाक्यः स्यात्तत्रापि यद्यसौ कम्पमानदेहस्तदा अन्येन पुत्रादिना हस्ताद् गृहीतोऽन्यथा कम्पमानदेहत्वाद्भूमिपाताद्यनर्थान् लभते अवेपमानदेहश्चान्येनाधृतोऽपि पतनाद्यभावादगलच्छालो यदि ददाति तदा भिक्षा गृह्यतेऽन्यथा निषेधः।१। 'अपहुत्ति'। अप्रभुर्दीयमानभक्तादेरस्वामी भृतकादिस्तस्मिन्। अप्रभुत्वाद्दीयमानं तेन न कल्पत इत्यर्थः। स्वामिना तु तद्धस्तेन दाप्यमानं कल्पते एव।२। 'पंड'त्ति। पण्डो नपुंसकस्तस्मिन् दोषाश्चाभीक्ष्णं तद्धस्ताद्भिक्षाग्रहणेऽन्योन्याभिलापादयः। स हि अतिपरिचयात् क्षोभणेन कामोत्कटकत्वात्साधोर्लिङ्गधावनादि कुर्यात्ततः कर्मबन्धः, सकृद्ग्रहणे च न तथादोषस्तथाऽहो एते नपुंसकादपि गृह्णन्ति इत्यादि लोके जुगुप्सा स्यात्। अपवादस्तु वर्द्धितचिप्पितमन्त्रोपहतौषध्युपहतऋषिशप्तदेवशप्तादिषु केषुचिदप्रतिसेविनपुंसकेषु ददत्सु भिक्षा ग्राह्या।३। 'वेविर'त्ति वेपमानः कम्पमानः कम्पमानकायस्तस्मिन्। स हि देयमानं भूमौ परिशाटयेत् तथा साधुभाजनाद्बहिर्भिक्षां क्षिपेत् देयमात्रकं वा पातनेन स्फोटयेत्तथा यद्यसौ दृढभिक्षाभाजनग्राही स्यात्, इतरथा मात्रादि भूमौ पातयेत्, तदा ग्राह्या।४। 'जरिय'त्ति ज्वरित आगततापस्तस्मिन्, दोषाश्चात्र वेपमानसत्कास्तथा जैना आहारलम्पटा ये ज्वरिणमपि न परित्यजन्तीति जने खिंसा स्यात्तथा विस्फोटकाद्यशिवज्वरस्य संक्रमोऽपि साधौ स्यात्। यदि सौचा

यगो एसो इच्चाइ, लोगो मिलिओ उड्डाहो जाओ। लुंटागा एए हवंति त्ति लोए वाओ जाओ। तउ आयरिएहिं तीए कोवोवसमण-
त्थं पेच्छंतीए चेव उवगरणं उड्डालिऊण सकोवं सो साहू भणिओ, जहा जो तुमं एवंविहाऽनीईकारओ तेण अम्हाणं न किंचि
कज्जं, नीहरह त्ति, तउ तीए उवसंतो कोवो। पच्छत्तावाऊरियहिययाए भणिया सूरिणो भयवं! एयमवराहं मम खमह। ते खमा-
विऊण गया सा सगिहं ति। तथा बालोऽपि यद्यसौ दक्षः स्यात्, मातुः परोक्षं स्तोकं च ददाति, तदा त्वं मात्रेदं दापित इत्यादि
पृच्छां विना तद्धस्ताद् गृह्यते स्तोकदेयतयोक्तदोषासम्भवात्, स्तोकदानेऽपि दोषसम्भवेऽसौ (पृच्छा) कार्या। यदि च मातुः परोक्षं
प्रचुरमसौ ददाति तदाऽवश्यं सा (पृच्छा) कार्या। ततो मातृसत्का प्रचुरमुत्कलना चेत्तदा गृह्यते नान्यथा। पार्श्ववर्तिन्या मात्रा पुत्रि!
साधवे देहीत्युक्ते च यद्यसौ तत्समक्षं स्तोकं प्रभूतं वा ददाति (तदा) पृच्छां विनापि गृह्यते।७। तथा मत्तो मदिरापानोत्थमद-
विह्वलस्तस्मिन्। अयं हि साधोरालिङ्गनमाहननं पात्रभेदं वा कुर्यात्। तथाऽशुचित्वात्तत्साद्भिक्षाग्रहणे जनखिंसा स्यात्। तथा यद्यसौ
मनाग्मत्तोऽन्यथाऽतिविह्वलः सन् दातव्यादातव्यविभागं न जानाति, सोऽपि चेच्छ्राद्धः, इतरो ह्यस्यार्थस्य लोके प्रकाशनात्प्रवचने
खिंसकः स्यात्, सोऽपि चेच्छुचिहस्तोऽसमयज्ञजनरहिते स्थाने च दद्याद्, अन्यथा प्रवचनखिंसा, तदा तद्धस्ताद् गृह्यते नान्यथा।
८। उन्मत्तो महासङ्ग्रामादिजयाद्दर्पाध्मातो ग्रहगृहीतादिश्च तस्मिन्। इहापि आलिङ्गनाहननभाजनभङ्गकरणगालीप्रदानादयो दोषा
ज्ञेयाः। तथा यद्यसौ धर्मप्रियः शुचिश्च स्याद्, अन्यथा प्रवचनखिंसकः स्यात्, तदा ग्राह्या।९। तथा करचरणौ हस्तपादौ छिन्नौ
कर्त्तितौ यस्येति विग्रहे वाऽऽहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य पूर्वनिपाताभावे करचरणच्छिन्न इति स्यात्। करछिन्नश्चरणछिन्न-
श्चेति द्वयं तस्मिन्। तत्र छिन्नकराद्भिक्षाग्रहणे मूत्राद्युत्सर्गादौ जलशौचाभावेऽशुचित्वाल्लोकनिन्द्यत्वाच्च जनखिंसा, दानासमर्थत्वाद्दे-

स्तासां मुख्यत्वाच्च कण्डतीत्यादिक्रियाः प्रतीत्य यच्छब्दे स्त्रीलिङ्गनिर्देशं कृतवानिति । एवं उत्तरत्रापि दृश्यं । तथाऽत्रापि यदा कण्डना-
योत्पादितं मुशलमत्रान्तरे साधुरायातस्तच्च यदि मुखदत्तलोहमयकुण्डलिकारूपायां कांच्यामलग्नकरव्यादिबीजं पाताद्यनर्थरहितगृह-
कोणादौ तु मुक्त्वा ददाति तदा कल्पते ।१५। तथा पिनष्टि शिलायां जलार्द्रसचित्तमुद्गादिसत्कदाल्यादि तिलामलककुस्तुम्बुरुल-
वणजीरकादि वा मृद्नाति वर्त्तयतीति यावत् । तत्र च काचिच्चखिका मुद्गादिर्वा तिलादिर्वा सचित्तः सम्भवतीति तत्सङ्घट्टो, भिक्षा-
खरण्टितहस्तयोश्च जलेन प्रक्षालने पुरःकर्म्मादिदोषश्च, तथा पिंषन्त्यामपि जलार्द्रसचित्तमुद्गादिसत्कदाल्यादिपेषणसमाप्तौ यदि ददाति,
त्रिश्छटं तंदुलादि वा पिंषन्ती यदि स्यात्तदा ग्राह्या ।१६। तथा 'भुंजइ'त्ति भृज्जति रतितुल्यं(चुल्ल्यां) कडिल्लकादौ चणकगोधूमा-
दीन् स्फोटयति, भर्ज्जमानाया हि भिक्षां ददत्या वेलालग्ना(गनेन) कडिल्लकादिप्रक्षिप्तचणकगोधूमादेर्दाहिऽप्रीत्यादि भावात्,
तथैतस्यामपि यत्सचित्तं गोधूमादिकं कडिल्लके क्षिप्तं तद्भृष्ट्वोत्तारितमन्यच्चाऽद्यापि हस्ते गृहीतमेतस्मिन् प्रस्तावे साधुरायात-
स्ततो यद्युत्तिष्ठति तदा गृह्यते ।१७। 'कर्त्तयति कृणत्ति वा' चक्रेण रूतप्रोणिकां सूत्रतया विदधाति ।१८। 'लोठयति' लोठिन्यां
कणकेन(शलाकया) कर्प्पासं रूततया विदधाति ।१९। 'विकृणुते' विकीर्णयति वा रूतं कराभ्यां पौनःपुन्येन श्लक्ष्णयति ।२०। 'पिञ्जयति'
पिञ्जनेन रूतं मृदु करोति । इह कर्त्तनादिकर्त्री देयलिप्तहस्ता सती हस्तधावनरूपं पुरःकर्मादि कुर्यात् । तथा लोठयन्त्या हस्ते सचित्त-
कर्प्पासः स्यात्कार्पासिकांश्च पादादिना सङ्घट्टयति । तथा चतसृष्वपि चायं ग्रहणविधिस्तत्र कर्त्तयत्यां यदि श्वेतताऽतिशयोत्पा
दनाय शङ्खचूर्णेन हस्तौ न लिप्तौ स्यातां, लिप्तौ वा चूर्णेन यदि निःशूकतया शुच्यर्थं जलेन न धावति पुरः पश्चाद्वा, तदा गृह्यते ।
लोठयन्त्यां च यदि हस्ते धृतः कर्प्पासो न स्यात्कार्पासिकान्वा यद्युत्तिष्ठन्ती न घट्टयति तदा गृह्यते । विकृण्वन्त्यां पिञ्जयन्त्यां च

